I

SRI VANI VILAS SANSKRIT SERIES No. 9.

# ॥ रुक्मिणीकल्याणम् ॥

# RUKMINI KALYANAM

BY

RAJACHUDAMANI DIKSHITA

WITH AN ENGLISH INTRODUCTION BY

*Vidyasagara Vidyavachaspati*

**P. P. S. SASTRY B.A.(Oxon), M.A.,**

*Professor of Sanskrit & Comparative Philology,*
*Presidency College ; & Curator, Government*
*Oriental Manuscripts Library, Madras.*





SRI VANI VILAS PRESS,

SRIRANGAM



# INTRODUCTION.

The comparative paucity of original works in Sanskrit in modern times is generally traced to three main causes, firstly, the rigid rules framed by the Rhetoricians and Grammarians governing not only the general structure of a work but also its minute details, secondly, the unsympathetic and unresponsive nature of the general atmosphere governing Hindu Society when it had become the prey to frequent invasions of foreign and fundamentally adverse civilisation and cultures, and thirdly, want of Royal Patronage.

The first cause can be a stumbling block only to second and third rate authors. Authors of real merit will not be deterred by the rules of Rhetoricians and Grammarians as they could very well master these and excel them. The second cause is indeed beyond the control of individual poets whatever their calibre may be. And the third cause is really the most important one as the delicate flower of orginality cannot

blossom if it is not watered and nurtured carefully and adequately.

Historians of Sanskrit literature treat generally of the greatness of Sanskrit Literature up to the eleventh century A. D. and do not find enough material to carry on their narratives beyond this period. The dissensions of the Hindu Religions and the consquent want of Royal patronage and the frequency of the invasions by Mahammadans and other foreigners contributed to a very great extent for the decay and gradual disappearance of authors of the first magnitude.

In places and localities which had been comparatively free from such foreign influences and when the Hindu principalities, however small they might be, continued to enjoy comparative peace and prosperity, we always find the necessary impetus for the growth of arts and culture which show themselves out by works of outstanding merit. The sixteenth and seventeenth centuries in South India are an instance to the point.

The petty principality of Tanjore enjoyed peace and plenty under the sympathetic and generous hands of the great Nayak Rulers who ruled Tanjore and the surrounding country from 1535 A. D. to 1675 A. D. No less than seventy authors of undoubted greatness flourished in this kingdom under the patronage of the Nayak Rulers.

Of these, the two great outstanding figures are the famous Appaya Dikshita and his equally famous scion, Nilakantha Dikshita, his brother's grandson.

Among Nilakantha Dikshita 's contemporaries Rajachudamani Dikshita who was his fellow pupil under the great teacher Venkatesvara Makhi deserves special mention.

Rajachudamani Dikshita was born of Ratnakheta Srinivasa Dikshita, the father-in-law of the illustrious Appaya Dikshita, and Kamakshi. He was educated in all branches of Sanskrit learning firstly by Ardhanarisvara Dikshita and finally by Venkatesvara Makhi. Even from very early times Rajachudamani gave promise of his

future greatness and versatility. In consonance with current practice he has pressed at least one definite date in his literary career. In his Tantrasikhamani he says :

" धीमान्मान्ये शकस्याब्दे हायने चेश्वराभिधे ।
चूडामणिः कलयते यज्वा तन्त्रशिखामणिम् ॥"

This gives the date of composition of the Tantrasikhamani as 1559 Saka or A. D. 1636, the same year in which his co-pupil Nilakantha Dikshita wrote his famous Nilakanthavijaya Champu. As many as twenty-seven works representative of all branchs of learning appear to have been composed by Rajachudamani Dikshita.

The Rukminikalyana is a Kavya in ten sargas, dealing with the well-known Pauranik story, of the marriage of Rukmini and Sri Krishna. The ten sargas deal respectively with the description of the city Dvaraka, the love in separation of Sri Krishna, the arrival at Kundinapura of Sri Krishna on hearing the mental anguish of Rukmini, the carrying off of Rukmini to Dvaravati, the entry of Sri Krishna and Rukmini into Dvaravati, the marriage of Rukmini with Sri

Krishna, the description of the summer-season, the description of the rainy season, the description of the Sarad-season and the descriptions of the Hemanta and Sisira seasons.

In respect of descriptive detail, fullness of imagery and delineation of situations and characterisation of individuals, this poem compares quite favourably with those of Kalidasa and other Nature-poets.

The Sri Vani Vilas Press has done a distinct service to the scholar-world in bringing out for the first time a complete edition of this fascinating and delightful Kavya of the seventeenth century.

SRIRANGAM. *P. P. Subrahmanya Sastri.*

॥ श्रीः ॥

# ॥ रुक्मिणीकल्याणम् ॥



वामालकावल्लभभावमुद्रा-
सीमाविभागेन्द्रमणीशिलेव ।
रोमावली राजति यस्य मध्ये
सोमावतंसः स सुखाय भूयात् ॥ १ ॥

यः स्थाणुना केवलमाततज्यं
तन्वन्क्षणाद्धन्ववरं सभङ्गम् ।
सीताशुभाङ्कुरसमृद्धिमाधा-
न्नूत्यै स भूयान्महिमा घनश्रीः ॥ २ ॥

जयाय भूयाज्जनकात्मजा सा
कुचेन कूलंकषगौरवेण ।

पतिव्रतौचित्यपरा पुरारि-
शरासगर्वं समकोचयद्या ॥ ३ ॥

मुधा रुदन्गर्भगृहे समेता-
मादातुमालिङ्ग्य हठेन राधाम् ।
कुर्वन्नखाङ्कान्कुचयोरमुष्या
मायाशिशुर्मङ्गलमातनोतु ॥ ४ ॥

रदाग्रसंचूर्णितरत्नसानु-
रजोभरैरङ्कजुषो रमण्याः ।
सीमन्तसीमान्तरमादधानः
सिन्दूरितं दीव्यति सिन्धुरेन्द्रः ॥ ५ ॥

उन्मीलयेदुक्तिभरं समग्रं
वल्मीकजन्मा कविवल्लभो मे ।
वाणी सुवृत्ताप्यभिसारिणीव
वव्रे यमुल्लङ्घितकाननालिः ॥ ६ ॥

उत्तालशब्दोचितचारुपाद-
न्यासा विचित्राभिनयव्यवस्था ।
वैयासिकी भारतवासनाढ्या
सरस्वती दीव्यति लासिकेव ॥ ७ ॥

अनन्तशाखागमपक्षपात-
 जुषः प्रकृत्या हरितत्त्वभाजः ।
शुकस्य वाणी सुकृतैकलभ्या
 न कस्य वानन्दभरं विधत्ते ॥ ८ ॥

उदञ्चितोच्चावचरागकाली-
 वीटीरसासारविवर्तमूर्तिः ।
सितायते सूक्तिरहो यदीया
 चित्ते स जागर्ति चिरं कवीन्द्रः ॥ ९ ॥

कालीमुखोद्यद्घनसारवीटी-
 सौरभ्यसौलभ्यजुषा यदुक्त्या ।
सिता सिताजायत लज्जितेव
 स कालिदासः स्तुतिगोचरः किम् ॥ १० ॥

यो मालतीमाधवयोगहृद्यः
 प्रायो रसालोचितभव्यपद्यः ।
आरामदेशः कवितालतानां-
 मामोददोऽयं भवभूतिरस्तु ॥ ११ ॥

माघाय माघं भवतान्मुकुन्द-
 केलीकथावर्णनपुण्यभाजे ।

स्वर्गावरोधा इव यस्य वाचः
स्वैरं भजन्ते सुरसार्थशय्याः ॥ १२ ॥

स भारविर्दीव्यति पादबृन्दै-
र्मन्देहसंमोहनमादधानैः ।
धनंजयस्फूर्तिविधायिभिः स-
त्पद्योदितैर्व्यञ्जितभावभेदः ॥ १३ ॥

बाणो धुरीणः कविपुंगवेषु
प्रकाशतां भव्यफलोदयश्रीः ।
अमुञ्चमानोऽपि गुणं परेषां
विव्याध मर्माणि विशेषतो यः ॥ १४ ॥

मयूरनामा कविमल्ल एष
चकास्ति सञ्चन्द्रकलालिकीर्त्तिः ।
यः शारदाभ्यागममप्यवाप्य
स्फुरत्कलापालि विजृम्भते स्म ॥ १५ ॥

क्षेमेन्द्रनाम्ने कविपुंगवाय
क्षेमाणि भूयासुरलं यदीया ।
कवित्वधारा करमाददाना
मन्दं विधत्ते मकरन्दमद्धा ॥ १६ ॥

पदेन दिव्यध्वनिभासुरेण
रसोर्मिमग्नान्रचयन्कवीन्द्रान् ।
दूरीकृतोन्मेषदुरीहकाव्यः
स वामनो भाति समुन्नतश्रीः ॥ १७ ॥

जडाशयानां हृदयं जगत्यां
यस्योदयाद्यातितमां प्रसादम् ।
स एव सारस्वतमर्मवेदी
विभाति मौलौ विदुषामगस्त्यः ॥ १८ ॥

सर्गेषु सर्गेषु विचित्रतत्त-
द्वृत्तानुरोधेन विनैव यत्नम् ।
व्यक्तं व्यवस्थापितवृत्तिभेदाः
परे च वाचामधिपाः प्रथन्ताम् ॥ १९ ॥

भाति क्षितौ वासरभासुरोच्चैः-
प्रदीपचिह्नो भगवत्प्रपन्नः ।
अशेषभाषाकविताप्रवीणो
वादोद्भटो व्याकृतसर्वतन्त्रः ॥ २० ॥

ध्वन्यध्वनीनो दशरूपकोच्चैः-
क्रियाकृतश्रीरमणानुकारः ।

विख्यातिमान्विश्वजिता मखेन
श्रीश्रीनिवासाध्वरिसार्वभौमः ॥ २१ ॥

गाधेयवंशाम्बुधिसंभवो यो
वसिष्ठनिष्ठां विदधे लघिष्ठाम् ।
सुधाझरीसोदरवाग्विलासो
दीव्यत्यसौ केशवदीक्षितेन्दुः ॥ २२ ॥

विरिञ्चिकान्ताकरपद्मचञ्च-
द्विपञ्चिकानिक्वणवञ्चकश्रीः ।
षड्दर्शनीकेलिसखी चकास्ति
वागर्धनारीश्वरवादिमौलेः ॥ २३ ॥

शय्यारसालंकृतिरीतिवृत्ति-
वृत्तोज्झिता गूढपदप्रचारा ।
गुरौ च वर्णे कुरुते लघुत्व-
मसत्कृतिश्चौर्यरतिक्रियेव ॥ २४ ॥

अधो गुणानाकलयन्नशेषा-
नसज्जनः पद्मवदात्तगन्धः ।
राज्ञः पुरो दर्शितमौनमुद्रः
प्रायेण जायेत जलानुषङ्गी ॥ २५ ॥

दोषोन्मुखा दूरत एव सूर्या-
लोके वहन्तो बहु वैमनस्यम् ।
अह्नाय घूका इव दुष्टलोका
बलाभिरस्या बलिहृत्प्रवेकैः ॥ २६ ॥

विशृङ्खलानां विततिः खलानां
कामं करोतु क्षतिमत्र काव्ये ।
शाणोपलाघर्षणतः समिन्द्धे
सौरभ्यसंपन्ननु चन्दनस्य ॥ २७ ॥

निकष्य मेधानिकषोपलेषु
सुवर्णतत्त्वं परिशोधयन्तः ।
अलंक्रियार्थं सुदृशामवन्यां
कामं कलादाः सुखिनो भवन्तु ॥ २८ ॥

राज्ञः प्रसादं विरचय्य शश्व-
दङ्कूरयन्ती कुमुदानुकूल्यम् ।
समादधाना बहुधान्यवृद्धिं
सतां सभा भाति शरन्निकाशा ॥ २९ ॥

जल्पामि कौतूहलतो यदल्प-
धीरप्यहं तत्कवयः क्षमन्ताम् ।

वक्रेऽपि काव्ये धनुषीव शूराः
प्रायो गुणारोपपरा हि सन्तः ॥ ३० ॥

पवित्रकीर्त्तेः परमस्य पुंस-
श्चरित्रसंकीर्तनभाग्यलोभात् ।
साहित्यसिन्धुं सहसा तितीर्षोः
सांयात्रिकः स्यान्मम तत्कटाक्षः ॥ ३१ ॥

हरेरपारे गुणवारिराशौ
कणं गृणन्तोऽपि वयं कृतार्थाः ।
पृषन्ति सिन्धोः पयसां कियन्ति
घना गृहीत्वातिघना भवन्ति ॥ ३२ ॥

क्षुण्णेऽपि साहित्यपथे कवीन्द्रैः
पुण्येन जायेत नवार्थसृष्टिः ।
किं पद्मनाभाहृतकौस्तुभेऽपि
चिन्तामणिः सिन्धुपतौ न जातः ॥ ३३ ॥

आसीदशेषाहितभूमिपाल-
शासी सुनासीरसमप्रभावः ।
तिम्मावनीनायकवर्यमाम्बा-
जन्मा सुधर्मा चिनचेव्वभूपः ॥ ३४ ॥

यस्य त्रिलोकीमणिहारयष्ट्या
मध्ये महानायकभावभाजः ।
कदापि न त्रासकथेति युक्त-
मत्यद्भुता या(ऽ)तरलत्वशैली ॥ ३५ ॥

यत्नं विना यस्य यशोपदेश-
सुधानुलिप्ते सुरनाथसौधे ।
प्रायः प्रवालद्रवलेपभङ्गीं
प्रतापभूमा प्रकटीकरोति ॥ ३६ ॥

अजायतास्मादयमच्युतेन्द्रो
मूर्त्यम्बिकायां महिते मुहूर्ते ।
सामन्तचूडाभुवि केतकीनां
सखी यदाज्ञापनचीटिकास्ते ॥ ३७ ॥

यशःपयोभिर्भरिताद्यदीयै-
र्ब्रह्माण्डभाण्डाद्बहिरुल्लसद्भिः ।
प्रायेण ताद्दक्षभुजप्रतापै-
र्बोभूयते भूरिनवप्रवालैः ॥ ३८ ॥

सत्रावतीर्णेषु यदाश्रितानां
सुत्रामसुख्येषु सुधाशनेषु ।

युद्धाहतैर्यः प्रतियोधियोधै-
　श्चक्रे पुरीं शातमखीमशून्याम् ॥ ३९ ॥

आलङ्कमाशंकरधाम यस्मि-
　न्दिने दिनेऽन्नं दिशति प्रजाभ्यः ।
जगत्प्रजारक्षणजागरूका
　देवी दधौ चिह्नतयैव दर्वीम् ॥ ४० ॥

महान्ति दानानि महीसुराणां
　कुर्वन्नखर्वाशयमानुपूर्व्यात् ।
श्रीरामसेतावनुहायनं यः
　सिन्धौ शिवायावभृथं व्यधत्त ॥ ४१ ॥

दिने दिने दीनकृतानुकम्पो
　दीनारजातानि दिशन्भृशं यः ।
ग्रामान्गुणग्रामनिकामरामा-
　न्पारेसहस्रं प्रददौ बुधेभ्यः ॥ ४२ ॥

भूषामशेषां भुवनैकमूल्यां
　भद्रासनं भव्यमणिप्रणीतम् ।
ग्रामाननेकानपि गाढभक्तिः
　श्रीरङ्गधाम्नेऽदित यो महिम्ने ॥ ४३ ॥

मायूरमध्यार्जुनकुम्भघोण-
श्रीदक्षिणावर्तमुखस्थलेषु ।
वृद्धाचले पञ्चनदे च सेतौ
सोपानसौधानतनिष्ट यो वा ॥ ४४ ॥

चिदम्बरे चित्परिणामभेदे
वैकुण्ठवीप्साजुषि वेङ्कटाद्रौ ।
श्रीकालहस्त्यादिषु चातनोद्यो
वृषाकपायीवरयोः सपर्याम् ॥ ४५ ॥

सौन्दर्यसंकेतनिकेतभूताः
सारस्यसर्वस्वनिधानसीमाः ।
सौभाग्यसाराः सुदृशः सहस्रं
भुवोऽधिविन्ना विदधेतमां यः ॥ ४६ ॥

मूर्त्यम्बिकायामजनिष्ट तस्मा-
द्रतीशरूपो रघुनाथभूपः ।
अत्युक्तिरत्यद्भुतपुण्यवृत्तौ
यत्र स्वभावोक्तियशोऽपि नैति ॥ ४७ ॥

यदाश्रितानां यजने हवींषि
महीतुमन्तर्गृहमागतस्य ।

द्वारोपकण्ठे द्विपडिम्भदम्भा-
द्वाहा वलन्ते घनवाहनस्य ॥ ४८ ॥

पतीन्वरीतुं प्रधने यदीये
निर्जग्मुषे निर्जरयौवताय ।
मालार्पणे मन्दतया प्रयाति
व्रीडाजडत्वं विटपी मघोनः ॥ ४९ ॥

भुजप्रतापस्फुरणैर्यदीयै-
रिदं विलीयेततमामितीव ।
विचिन्त्य हैमं जगदण्डभाण्डं
वेधा जलान्तर्विदधे सुमेधाः ॥ ५० ॥

सत्रे यदीये मृदुलान्नसेतु-
राज्यप्रवाहैरभितो विभिन्नः ।
पाकप्रकर्षात्कठिनैः पयोभि-
र्निबध्यते नित्यमिलानिलिम्पैः ॥ ५१ ॥

श्रीपारिजाताहरणाभिधानो
येनैकरात्रेण कृतो निबन्धः ।
अन्ये च वाल्मीकिचरित्रमुख्या
विश्वप्रतीता विहिताः प्रबन्धाः ॥ ५२ ॥

अध्यास्य तन्नानगरीममुष्मि-
न्सर्वंसहां शासति सार्वभौमे ।
श्रीराजचूडामणियायजूक-
श्चित्तं निबध्नाति हरेश्चरित्रम् ॥ ५३ ॥

अस्ति क्षितेराभरणं रमान्तः-
पुरी पुरी वृद्धिकरी यदूनाम् ।
वितन्वती द्वारवतीत्यभिख्यां
विख्यातिविस्तारवती जगत्याम् ॥ ५४ ॥

वसुंधरायां वसुधाधिनाथैः
सुखं धृतायां सुचिरं यदीयैः ।
प्राकारदम्भात्परिखापथेन
प्राप्तः समुच्छ्वासकृते फणीन्द्रः ॥ ५५ ॥

यस्याः समायोजितखेयकाञ्चे-
रुड्याणमुद्दाममवैमि सालम् ।
रत्नार्गलारम्भितरम्यकीलं
मुखं मणीगोपुरमप्यमुष्य ॥ ५६ ॥

मन्ये मरुत्वन्मणिनिर्मितानि
शिरोगृहाणां शिखराणि यस्याम् ।

वियन्नदीवीचिभरानुषङ्गा-
दजस्रमञ्चज्जलनीलिकानि ॥ ५७ ॥

व्रीडातिरेकाद्विनमन्मुखीनां
कन्यामणीनां परिणीतिकाले ।
हर्म्येषु यस्यामतिलङ्घिताभ्रे-
ष्वास्त ध्रुवालोकनमप्रयासात् ॥ ५८ ॥

सौधेषु यस्यां सुदृशः शशाङ्के
गण्डोपधानभ्रमतः कपोलौ ।
तन्वन्ति रात्रीषु तदङ्गलग्नं
कस्तूरिकाचित्रकमङ्कदम्भात् ॥ ५९ ॥

सौधेषु यस्यां सुदतीमुखश्री-
चौर्यादवाप्तध्वजशूलपातः ।
विधुः सुधावैभववीतबाधः
किंणं बिभर्ति व्रणजं किमङ्कम् ॥ ६० ॥

रयानुधावद्रविवाजिवल्गा-
त्खुराग्रशीर्यत्कुरुविन्दशङ्काम् ।
पुष्णन्ति यद्गोपुरशृङ्गभूमौ
पूषोपलेभ्यः स्फुरिताः स्फुलिङ्गाः ॥ ६१ ॥

शीतालुभिर्यत्र शिरोगृहेषु
गाढं कुमारैर्घटितार्गलेषु ।
तारासु रुद्धासु चिरं तमिस्रा
मन्ये हिमर्ताविभवन्महत्यः ॥ ६२ ॥

ध्वजाग्रभिन्नद्रुहिणाण्डभाण्ड-
निष्यन्दमानाम्बुनिरन्तरेषु ।
सौधेषु धारागृहसौख्यदेषु
जानाति यस्यां जनता न घर्मम् ॥ ६३ ॥

वियद्धुनौ यत्र विहारभाजां
विश्रान्तिहेतोर्विबुधाङ्गनानाम् ।
प्रणीतमम्भोभवनं यदीयं
प्रासादमभ्रंकषशृङ्गमूहे ॥ ६४ ॥

मन्दाकिनीकल्पितमज्जनाभिः
पुरंदरान्तःपुरसुन्दरीभिः ।
वातायबद्धानि यदीयसौधे
वासांसि मन्ये विचलाः पताकाः ॥ ६५ ॥

वलद्विषद्वारणदानपङ्क-
नीलीविलिप्ता नियतं पताकाः ।

सौधेषु यस्यां सुरसिन्धुपूरे
विशोध्य वातो विशदीकरोति ॥ ६६ ॥

मन्दाकिनीवीचिमरुत्प्ररोह
दोधूयमानध्वजशाटिकासु ।
यच्चन्द्रशालासु न यान्ति सिद्धा
यत्नं रतान्ते व्यजनानिलाय ॥ ६७ ॥

प्रत्युप्तमुक्ताफलकैतवेन
प्रस्वेदिनी भास्करसंनिधानात् ।
प्रासादपाङ्क्तिः प्रचलत्पताका-
व्याजादुदञ्चद्व्यजनेव यस्याम् ॥ ६८ ॥

मन्ये मणीतोरणमालिकां य-
त्प्रासादलोलां भवनेन्दिराभिः ।
परस्परं भाग्यविलोकनाय
प्रसारितामेव कटाक्षरेखाम् ॥ ६९ ॥

प्रायो वज्ञारेः परिपन्थिवर्गे
पराजिते यत्र नृपप्रतापैः ।
चकार वेधा हरिचापवल्लीं
चञ्चन्मणीतोरणदाम सौधे ॥ ७० ॥

शोणाधरा यन्मणिसौधभूमौ
वीणागुणास्फालनलब्धवर्णा ।
एणाङ्करेखाग्रहणाय यत्नं
कोणाशया कोरकितं विधत्ते ॥ ७१ ॥

कोकारिरेखामणिकोणयष्ट्या
निक्काणयन्त्यो निपुणं विपञ्चीम् ।
सुधार्द्रतन्त्रीस्वरविप्लवेन
सौधेषु यस्यां सुदृशस्त्रपन्ते ॥ ७२ ॥

संगीतसर्वस्वरहस्यभङ्गी-
सारस्यसारानुकृतावदक्षा ।
विद्धा नखैर्यत्र विलासिनीनां
बीणा विरावेण विरोदितीव ॥ ७३ ॥

पाणौ गृहीत्वा परिवादिनीं य-
त्पौराः स्फुरत्पञ्चमरागमुद्राम् ।
अहो श्रुतिग्रामपथानुसार-
प्राप्तप्रकर्षा जगति प्रथन्ते ॥ ७४ ॥

अन्तः स्फुरद्भिः परिखासु हर्म्यै-
रत्युन्नतैरायतसप्तभूमैः ।

चतुर्दशानां जगतामपास्त-
सीमाविवादेव समेधते या ॥ ७५ ॥

त्रिविक्रमस्यैकमधो निविष्टं
त्रिविष्टपे चोच्छ्रितमन्यमङ्घ्रिम् ।
परिस्फुरन्ती परिखाजले य-
त्प्रासादपङ्क्तिः स्मरयत्युदग्रा ॥ ७६ ॥

पातालोके परिखाजले या
हर्म्येण हन्त प्रतिबिम्बितेन ।
पराजितायाः फणिराजधान्याः
प्रायेण मौलौ पदमादधाति ॥ ७७ ॥

पुङ्खानुपुङ्खस्फुरदात्मलक्ष्मी-
वीक्षाकृतेऽधोमुखतां व्रजन्ती ।
विभ्राजते वृत्रजितः पुरीव
वियद्धुनीवीचिषु बिम्बिता या ॥ ७८ ॥

विनिर्जिता निर्जरराजधानी
वियत्तटिन्यां प्रतिबिम्बदम्भात् ।
निरीक्ष्यतेऽन्तर्वसुगोपनेन
निमज्जितेवाम्बुनि यत्समृद्ध्या ॥ ७९ ॥

अधोविसर्पन्मणिगोपुराग्र-
मणिप्रभालीमयशृङ्खलासु ।
व्यालम्बिता या वरणाभिगुप्ता
निधिः किलास्ते निखिलाद्भुतानाम् ॥ ८० ॥

शङ्के यदुत्तुङ्गशिरोगृहेषु
कण्डूविनोदाय कषन्कपोलौ ।
महेन्द्रदन्ती मदपङ्कलग्नैः
सपद्मको भाति सरोजरागैः ॥ ८१ ॥

आरामसीमासु महीरुहाणा-
मम्भोजबन्धौ विचरत्यधस्तात् ।
यत्रातपत्राणि यदूद्वहानां
प्रायेण नु प्राभवचिह्नमात्रम् ॥ ८२ ॥

मनोज्ञमन्दस्मितचन्द्रिकाभिः
शश्वद्द्रवद्भिः शशिकान्तकुम्भैः ।
यत्नं विना यत्र विलासवत्यः
सिञ्चन्ति लीलावनबालसालान् ॥ ८३ ॥

प्रवालमुक्ताफलपद्मराग-
वैदूर्यगारुत्मतवज्रनीलैः ।

क्रीणन्ति गोमेधकपुष्यरागैः
फलानि यस्यां किल पौरबालाः ॥ ८४ ॥

तामावसन्वासवधामरम्यां
तत्तादृशैश्वर्यनिधानसीमाम् ।
ररक्ष रक्षोभयतस्त्रिलोकीं
सर्वामिमां सात्वतसार्वभौमः ॥ ८५ ॥

वरं नवोढेव पुराणवाणी
व्यनक्ति यं वाङ्मनसातिदूरम् ।
परात्परं तं परिमेयवाचो
वयं कथं वर्णयितुं प्रगल्भाः ॥ ८६ ॥

कदाचिदेकान्तकृतादरोऽसौ
दामोदरो दारुकदत्तहस्तः ।
सर्वर्तुसांनिध्यसमेधमान-
नेत्रोत्सवं निष्कुटमाससाद ॥ ८७ ॥

मन्दानिलान्दोलितमञ्जुवल्ली-
दोलाविहारोदितदोहदाभिः ।
भृङ्गीभिरङ्गीकृतमारवीर-
संगीतभङ्गीसरसोपकण्ठम् ॥ ८८ ॥

प्रसूनलूपादनखेन्दुकान्ति-
संदोहसंपर्कचमत्क्रियाभिः ।
निष्यन्दमानैर्निकटेन्दुकान्तै-
र्नित्यं नदीमातृकतां भजन्तम् ॥ ८९ ॥

मन्दारपुष्पस्तबकापदेशै-
र्माङ्गल्यकुम्भैर्मधुवारिपूर्णैः ।
मारावनीनायकशेखरस्य
वीराभिषेकं विदधानमारात् ॥ ९० ॥

निलीय पुष्पस्तबकोदरेषु
निस्पन्दपुष्पंधयकैतवेन ।
निद्राति यस्मिन्निभृतं तरूणां
छायारुणोल्लङ्घनजाङ्घिकानाम् ॥ ९१ ॥

तत्तादृशामोदतरङ्गिताभि-
रालिङ्गिताः कल्पलतावलीभिः ।
उच्चावचा यत्र सुखोन्नतत्व-
प्रख्यातिभाजो विटपाः प्रथन्ते ॥ ९२ ॥

दूरादहो दोहददायिनीनां
पादाम्बुजानां परिचिन्त्य बाधाम् ।

संवाहनायेव शयानशौकाः
प्रसारयन्ते किसलानि यत्र ॥ ९३ ॥

शङ्के पदाम्भोजतलाभिघाता-
त्कङ्केलिसालैरुपदर्शितानाम् ।
करस्फुरत्कान्तिमुषां दलानां
कान्ताजनो यत्र करोति भङ्गम् ॥ ९४ ॥

प्रसूनलावीजनपाणिपद्म-
स्पर्शोत्सवाय स्पृहयन्निवारात् ।
पुनः पुनर्यत्र रसालसालः
पुष्णाति पुष्पस्तबकाननेकान् ॥ ९५ ॥

कुरुण्टशाखी कुटिलेक्षणानां
कुचेषु कूलंकषतापशान्त्यै ।
गुलुच्छकुम्भोद्गलितैर्मरन्दै-
राभाति यस्मिन्नभिषिच्यमानः ॥ ९६ ॥

हसन्मुखीरिन्दुमुखीः सलील-
मालोक्य पुंनागगणो यदीयः ।
उत्फुल्लपुष्पस्तबकापदेशा-
दुदीर्णमन्दस्मितवद्विभाति ॥ ९७ ॥

यदृच्छया यत्र विलासवत्यो
दृशा स्पृशन्त्यस्तिलकं जडं च ।
आपादमाचूडमनङ्गबाणै-
रातन्वते हन्त हठावकीर्णम् ॥ ९८ ॥

प्रायः प्रियालः प्रमदाजनाना-
माकर्ण्य गीतीरमृतैकरीतीः ।
सद्यःस्फुरत्कोरकसङ्गिभृङ्गी-
संगीतभङ्ग्यानुकरोति यस्मिन् ॥ ९९ ॥

कान्तामणीनां नवकर्णिकाराः
श्रोतुं गिरः श्रोत्रसुखायमानाः ।
प्रत्यग्रपुष्पस्तवकावनम्राः
प्रायेण मौलिं नमयन्ति यस्मिन् ॥ १०० ॥

उपान्तवल्लीभवनोदरेषु
नितान्तनिश्वासजुषो रतान्ते ।
सीमन्तिनीर्यत्र हि सिन्दुवारा
हसन्ति सूनैरचिरोज्जिहानैः ॥ १०१ ॥

आस्वाद्य यस्मिन्नमृतोपमानं
मुखासवं मुग्धविलोचनानाम् ।

वक्त्रेषु तासां वकुला मधूनि
भूयः स्वयं पुष्पमुखैर्दिशन्ति ॥ १०२ ॥

मनस्विनीनां मदरागतैलै-
श्चमत्कृता चम्पकदीपपङ्क्तिः ।
प्रायेण यस्मिन्परितः षडङ्घ्रि-
परम्परां संतमसं निरुन्द्धे ॥ १०३ ॥

विना मिलिन्दालिगुणानुषङ्ग-
चमत्क्रियां चम्पकपुष्पबाणैः ।
मनोभवो यत्र विचित्रशक्ति-
र्मनस्विनीमानभिदां तनोति ॥ १०४ ॥

पाद्यं पुष्परसैस्तवार्जुनकृतप्रीतेस्तनोत्यर्जुनः
पुंनागः पुरुषोत्तमस्य तनुते पुष्पोपहारक्रियाम् ।
धत्ते मन्मथ एष मन्मथपितुर्दिव्यैः फलैः प्रीणना-
मित्याकर्णितदारुकोक्तिरदधादीशः परां निर्वृतिम् ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
प्रथमः सर्गः ॥

# द्वितीयः सर्गः ॥

---

अथ स्मरोद्दीपनमात्मनिष्कुटं
विलोचनासेचनकं विलोकयन् ।
अतन्तनीदेष हृदन्तरातिथिं
मधुद्विषन्भीममहीशनन्दनाम् ॥ १ ॥

वियोगसंतापभरापनुत्तये
विगाह्य शौरेरथ मानसोदरम् ।
कृताप्लवायां कृशमध्यमामणा-
वुपर्युपर्युत्कलिका जजृम्भिरे ॥ २ ॥

चिराय चिन्तोपधिदूतिकामुखा-
त्समेत्य संकेतगृहं मनो विभोः ।
असौ परावेक्षणशङ्कयाबला
बहिर्न गन्तुं चकमे बलादपि ॥ ३ ॥

घनाघनस्तत्कबरीभरच्छल-
श्चरीकरीति स्म पदं हृदन्तरे ।

विभोर्विचित्रं दृशि बाष्पवृष्टिभि-
  र्विसृत्वरीभिः समभावि सत्वरम् ॥ ४ ॥

वियोगघर्मांशुविवर्धितोष्मणो
  महीभृतस्तस्य मनस्तटे भ्रमन् ।
विदर्भजाकैशिकविभ्रमाम्बुदो
  व्यजृम्भयद्बाष्पभरं नु निर्भरम् ॥ ५ ॥

विवेकराकाविधुमाशयागते
  वधूमणीवेणिमुधाविधुंतुदे ।
ग्रसत्यसौ सत्यममज्जदञ्जसा
  विभुर्मुहुर्मोहमहार्णवाम्भसि ॥ ६ ॥

तदा हृदाकाशपथावतारिणा
  तदीयवेणीतमसा तिरोहिते ।
विवेकशीतत्विषि किं विभोस्तमो
  विमोहसंतानमयं व्यजृम्भत ॥ ७ ॥

यदा तदक्षिभ्रुवमिन्दिराधिभू-
  र्निनाय चित्ताध्वनितान्तपान्थताम् ।
स चक्षुषाध्यक्षयति स्म तत्क्षणे
  स्मरस्य जैवं सशरं शरासनम् ॥ ८ ॥

अमुष्य पद्मं किल नाभिजातमि-
त्युपेक्ष्य तन्वीमसुताद्दगुत्पलम् ।
स्मरोऽभिजातं स्मृतमायुधं व्यधा-
द्विना न मुख्यं करणं महज्जयः ॥ ९ ॥

मनोभिधानो मधुविद्विषो झषो
विलासहासामृतवीचिषु भ्रमन् ।
विदग्धलीलातिलकस्य नासिका-
विभूषणं हा बडिशं व्यगाहत ॥ १० ॥

तदुक्तिनिश्वासविलोचनानन-
स्मृतिक्षणेषु क्रमशस्तमाक्षिपन् ।
पिको मरुन्मारशरो निशाकरो
विरोधिचिन्तां विषहेत को नु वा ॥ ११ ॥

तदाशयो लोलदृशस्ततोऽधर-
प्रवालशय्यापरिवृत्तिमादधत् ।
यथेष्टमाश्लिष्य च हारयष्टिका-
मसोढ गाढं स्मरतापगाढताम् ॥ १२ ॥

निरन्तरध्याननितम्बिनीमणी-
मनोज्ञहारावलि मानसं विभोः ।

अवाप मुक्तामयतामथ क्षणा-
दधार तादृक्करलात्मतामपि ॥ १३ ॥

तदग्रहारैकतलं तलोदरी-
मणेः समाक्रामदुरोजमण्डलम् ।
करग्रहं कर्तुमियेष तन्मनो
व्यवस्थितिः कामवशंवदेषु का ॥ १४ ॥

धराधरं यः स्वकरोदरे पुरा
दधार सोऽयं दनुजान्तकस्तदा ।
पयोधरं पद्मदृशः स्मरन्नपि
श्रमोत्तरङ्गश्वसितानिलोऽभवत् ॥ १५ ॥

विदर्भपाठीनविलोचनामणेः
पयोधरेऽथ स्मृतिपद्धतिस्पृशि ।
स राजहंसः सहसैव मानसे
समेधितौत्सुक्यभरोऽभवत्तराम् ॥ १६ ॥

नतभ्रुवोऽस्या नवरोमराजिकां
नयत्यमुष्मिन्नलिनेक्षणे मनः ।
कृपामपास्याशु कृपाणवल्लरीं
रयेण पाणौ रतिजानिरादधे ॥ १७ ॥

नितम्बिनीतुङ्गकुचाचलाञ्चला-
न्निपात्य नाभीकपटावटे स्मरः ।
गृहीतरोमावलिशृङ्खलो दृढं
बबन्ध तन्मानसगन्धसिन्धुरम् ॥ १८ ॥

उदूढरोमालिनिभोरगाननः
सुखं विशन्नाभिमृषासुरङ्गया ।
तदीयचेतोमिषतस्कराग्रणी-
रवाप नीवीपदमङ्गनामणेः ॥ १९ ॥

उपेत्य रोमालिशराभिमुख्यभा-
गुरोजमस्याः किल नाभिकूपतः ।
निरन्तरे चन्दनकर्दमे चिरं
न्यलीयतान्तर्मधुजिन्मनोझषः ॥ २० ॥

कुचस्थलात्कुङ्कुमपङ्कपिच्छिला-
न्निपत्य मग्नं बत नाभिकाह्रदे ।
मनो मुरारेर्मदनः समुद्धर-
न्नितम्बचक्रेऽभ्रमयन्नतभ्रुवः ॥ २१ ॥

नितम्बचक्रं निरवद्यमङ्गना-
मणेर्मुकुन्दो मनसास्पृशद्यदा ।

निरास्थदास्थां निजचक्रके तदा
ततो विधत्तेऽनुशयस्थितिं नु तत् ॥ १२ ॥

अवाप्य काञ्चीस्थलमङ्गनामणेः
समेत्य मुक्तावलिभिः सदा चिरम् ।
अथोरुरम्भापरिरम्भसंभ्रम-
स्पृहामहो भूमिभृदाशयो दधौ ॥ २३ ॥

अनर्घजङ्घाधिगतिं वधूमणे-
रमन्यतोच्चैर्जयकाहलीगतिम् ।
पदद्वयप्राप्तिमपि क्रमोदिता-
मुदारपद्मोपगतिं तदाशयः ॥ २४ ॥

समानशीलेषु समग्रमिन्द्रिये-
ष्वखर्वनिर्वेदकृतार्तिपूर्तिषु ।
असुस्थदस्याः कथया हरेः श्रुतिः
कुतो व्यवस्था कुटिलात्मनां भवेत् ॥ २५ ॥

अनारतं हन्त निनिन्द नारदं
शुभोत्तरोक्तिं शुकमप्युपैक्षत ।
न पुण्डरीकेऽपि स नर्म निर्ममे
प्रियेऽपि न प्रीतिमुशन्ति योगिनः ॥ २६ ॥

समीरपोतं समगर्हताम्बुदं
निरास्थदृक्षाधिपतिं निनिन्द यत्।
विदेहकन्याविरहादपि प्रभु-
र्विदर्भसुभ्रूविरहेण विव्यथे ॥ २७ ॥

निरास तारापतिमेष नो मुदं
नवाङ्गनानन्दनकेलिषु व्यधात्।
बबन्ध चक्रेऽप्यरतिं तदा ध्रुवं
रघूद्वहीभावजवासनावशात् ॥ २८ ॥

असावरिश्रेणिकदर्थनापरे
विभावयन्राजनि मित्रभावनाम्।
व्यधत्त विद्वेषपदं तु तद्विषं
कुहूं मुहुर्नीतिविदां पथि स्थितः ॥ २९ ॥

विशामधीशस्य वियोगसंज्वर-
स्तथा ततानातनुतानवं तनौ।
यथामुना मन्दसमीरणादपि
प्रकम्पसंपल्लघु पर्यचीयत ॥ ३० ॥

अणोरणीयानिति यो हरिः पुरा
पुराणवाण्या निरणायि केवलम्।

तथाविधोऽसौ ददृशे दृशा जनैः
कृशोदरीतादृगयोगकर्शितः ॥ ३१ ॥

जनार्दनो निर्दयमर्दिताशयः
स्वजन्मना हन्त सुगन्धिधन्वना ।
भवेत्प्रमोदाय पराजयः सुता-
दिति प्रतीतिं निरधारयन्मुधा ॥ ३२ ॥

पुरा पुरारेरपि योऽभिनद्धनुः
स एष वेषान्तरसंवृतः प्रभुः ।
भवाभिभूतादतनोरपि क्षतिं
बभाज कालो हि बली बलीयसाम् ॥ ३३ ॥

पुरः स्फुरत्युत्पलिनीविटे हरि-
र्दधौ दुरन्तां हृदरुंतुदां व्यथाम् ।
अदक्षिणाक्षिस्फुरणे हि तत्क्षणा-
द्भवन्ति भव्येतरभाजनं जनाः ॥ ३४ ॥

अमुष्य मन्दं चलितेऽपि मारुते
मनस्यमन्दं समभावि शङ्कया ।
तनूभुवापि प्रतिकूलता दधे
क राज्ञि सौख्यं प्रतिकूलतां गते ॥ ३५ ॥

स एष जात्या कुटिलः सनामता-
दुराग्रहाद्द्यतु शौरये विधुः।
कथं नु सांसिद्धिकसौमनस्यम-
व्यबाधतामुं शरजालमाङ्गजम् ॥ ३६ ॥

मनोगतामुन्मदमन्मथव्यथां
वसुंधरेशो वचांसि न्यवीविशत्।
विना परीवाहविधिं जलाशये
महत्तरो माति किमम्भसां भरः ॥ ३७ ॥

वियोगविश्राणितवैधुरीधुरं
मनो विदन्मे मलयानिलोऽधुना।
दुनोति वेगे बहुधा धुतोऽमुना
पराजिताः स्युः समयप्रतीक्षिणः ॥ ३८ ॥

निरस्तचक्रप्रणयो निमेषतो
हठादधिक्षिप्ततराक्षसंगतिः।
मनोरथः शीर्यति हन्त मामकः
समीरपोतेऽपि समीपमेयुषि ॥ ३९ ॥

वृषाकपायीप्रणयागसि व्यथां
विचिन्त्य मन्दानिलतो वितर्कये।

व्यधत्त धातंधयवल्लभं ह्रो
  विभूषणं विभ्रमतल्पमच्युतः ॥ ४० ॥

समुत्तरङ्गा दिविषत्तरङ्गिणी
  सनीडसंचारकरं निशाकरम् ।
निमज्जयेन्नीरभरे क्षणं न किं
  कुतोऽथ वा स्यादुडुपस्य मज्जनम् ॥ ४१ ॥

घनावलीयं क्षणमर्धमेव वा
  कठोरवृत्तिं क्षणदाकुटुम्बिनम् ।
पिधाय जायेत मम प्रियाय किं
  मुदेऽथ वा स्यात्किमु मेघसंततिः ॥ ४२ ॥

विधुं तुदन्तं किरणैर्वियोगिनो
  विधुंतुदो हन्त गिरन्विशृङ्खलम् ।
परोपकारप्रवणा न जिह्मगा
  इति प्रथां किं नु मुधा विधास्यति ॥ ४३ ॥

वधूकुचाश्लेषविशेषवञ्चितो
  विधुंतुदः सामिवियोगविह्वलः ।
वियोगिपीडैकविधाविशृङ्खलं
  ग्रसेत यद्वा क्षणदाधिपं कथम् ॥ ४४ ॥

जगत्प्रभोरेष जटाटवीधुने-
    र्ललाटवह्नेश्च चमूरुलाञ्छनः ।
अधीत्य शीतोष्णकृतौ कृती कुले
    व्यनक्ति ते युक्तवियुक्तवर्गयोः ॥ ४५ ॥

नमो महिम्ने नटते दिनावधौ
    वियुक्तलीलावियुतोऽपि यः पुरा ।
जटाटवीझाटकुटीकुटुङ्गभू-
    कुटुम्बिनीन्दौ कुशली समेधते ॥ ४६ ॥

अनन्तरं संततदन्तुरीभव-
    दुरन्तसंतापनिरन्तरान्तरः ।
अमन्ददर्पाद्वयमिन्दुदर्पकौ
    निनिन्द मन्दं मरुतं च नन्दभूः ॥ ४७ ॥

स कालकूटोऽसि शशिन्न चेत्कथं
    समुल्लसेन्मोहनशक्तिरीदृशी ।
भवन्तमाकारविलेखनभ्रमा-
    त्प्रजाः कलाकूटतया प्रचक्षते ॥ ४८ ॥

अहो भवानन्तरशान्तपावकं
    हराक्षिदग्धस्मरभस्ममण्डलम् ।

दहन्ति हा हन्त मरुद्धुता विधो
करांकुराकारभृतः कणा यतः ॥ ४९ ॥

सगर्भ्यता नो शशलाञ्छन त्वया
विषानिमेषाशनयोर्विशिष्यते ।
तथापि चाद्यानुकृतिं करोषि किं
न जन्मवक्रा मलिनानुवर्तिनः ॥ ५० ॥

सुधेन्दिराश्वस्तरुकौस्तुभादिकं
परःसहस्रं सृजतात्पयोनिधिः ।
तथापि दोषाकर दुर्यशो निजं
न मार्ष्टुमीष्टे भवदीयसृष्टिजम् ॥ ५१ ॥

तुषानलभ्रान्तिकरैः करोत्करै-
स्तुषारभानो तुदसि प्रसीद मे ।
तदास्यदास्यं तव दापयाम्यहं
तया युतश्चेत्सुकृतैः पुरा कृतैः ॥ ५२ ॥

कुतो विरोधं कुरुषे वृथा विधो
श्रियोऽनुजः स्यालतयासि संमतः ।
भजानुकम्पां भवता विनापरः
समीक्ष्यते नो सहजापतिं द्विषन् ॥ ५३ ॥

विधो सुराहारतयासि विश्रुत-
स्तथा समुद्यद्गुरुदाररागभाक् ।
निशासु हन्तास्ययुतद्विजावले-
श्चिराय हैमीं श्रियमाहरस्यपि ॥ ५४ ॥

सदैव सख्यं मधुपावलीगुण-
स्पृशा विधत्से स्पृहयाब्जजन्मना ।
अहो महापातकपङ्ककाङ्क्षिते
कुतो बतोदेति कृपा तथा त्वयि ॥ ५५ ॥

कुतः स्मरप्रेष्यमुपारुभे विधुं
प्रहर्तुरागः परिघः करोतु किम् ।
हरस्य तस्मिन्नयनानले हुते
शिरःस्थितोऽप्येष करोति किं पुरा ॥ ५६ ॥

स्मरोऽसि कंदर्प वियोगिघस्मरो
न भीमसेनोऽजनि भीमनामकः ।
वियोगिनां दर्पहरश्च दर्पको-
ऽस्यमा न दर्शः किमदर्शनाद्विधोः ॥ ५७ ॥

ध्रुवं विषश्रीकशिलीमुखो भवा-
न्बिभर्ति कन्तो विषमायुधाभिधाम् ।

न पञ्चबाणीभरणाद्यदेकदा
पतन्ति हा हन्त परःशतं शराः ॥ ५८ ॥

अनङ्ग ते पञ्चशराभिधा मुधा
विमुञ्चसे यद्विशिखान्परःशतम् ।
मधुर्मधुद्वेषिणि मय्युत क्रुधा-
शरान्नु दत्ते शतशस्तवाधुना ॥ ५९ ॥

पुरद्रुहा फालविलोचनानले
पुरा भवन्तं मदनेन्धनीकृतम् ।
सुधाभिरुज्जीवयति स्म किं न्वदः-
शिरःस्थितस्त्वत्सुहृदिन्दुपातकी ॥ ६० ॥

निशाकरस्त्वत्सचिवो निजामृतै-
रमीलयिष्यद्दृशमूष्मणा न चेत् ।
अधक्ष्यदद्धा त्रिजगत्प्रभुः पुन-
र्भवन्तमङ्ग स्मर पान्थघस्मरम् ॥ ६१ ॥

द्वयोः समा वां सुमनोवरेषुता
तथा सुपर्वाश्रयधन्वधारिता ।
तथापि दग्धोऽसि दृशा हरेण य-
त्तदेतदध्वन्यवधोदितं फलम् ॥ ६२ ॥

शिलीमुखैर्निर्भरसौरभोर्मिलै-
स्त्वमात्तगन्धामपि पान्थसंततिम् ।
प्रसूनबाण प्रसभं नयस्यहो
कथं नु वामोदकथानभिज्ञताम् ॥ ६३ ॥

मदान्धवृत्तिर्मधुशीलनाद्भवा-
न्मनो विधत्ते रतिलालसं सदा ।
सुगन्धिधन्वन्सुमनोगणैर्गुण-
स्तथापि चित्रं तव लाल्यतेतराम् ॥ ६४ ॥

शिलीमुखस्ते निशितान्ततां दध-
द्दिवापि दत्ते स्मर तान्ततां कथम् ।
कथं तथासावहरार्तिदः स्वतो
निशासु चार्तिं नितरां ददाति नः ॥ ६५ ॥

स्मरोऽयमास्तामयमेव केवलं
मया विनिन्द्यो मरुदेव केवलम् ।
निदाघतस्तत्र निलीनतां गते
भवत्यसौ भङ्गुरविक्रमो न किम् ॥ ६६ ॥

विदेहकन्याविरहार्तिविह्वली-
भवत्ककुत्स्थस्थपतिप्रमोदनः ।

प्रभञ्जनायुग्जनताविभञ्जना-
त्त्वदाञ्जनेयो जनिमासदत्कथम् ॥ ६७ ॥

अवैमि मन्दानिल चन्दनाचलो
भवत्प्रसूर्भाग्यविपर्ययेण नः ।
पितामहप्रीतिमता हनूमता
निपातितः सेतुकृते न नीरधौ ॥ ६८ ॥

परास्तमेरुस्थिरतो भवान्पुरा
कुतोऽद्य मेऽरुःस्थिरताकृतोद्यमः ।
समीरणानक्षिगतः सदा नृणां
गतोऽधुना मेऽक्षिगतस्त्वमाः कथम् ॥ ६९ ॥

अनक्षिलक्ष्यो हरिणाश्व बाधसे
वियोगिनो विक्रमिणां न स क्रमः ।
पथि त्वमक्ष्णः पतितो यदि क्षणं
तदीक्षणोल्कातरलीकृतो भवेः ॥ ७० ॥

वियोगिनां मारुत वीक्षणोल्कया
विपत्तिशङ्की निजवाहनस्य ते ।
अनक्षिलक्ष्यत्वकथोपदेशने
स्मरो वताचार्यकमाचचार किम् ॥ ७१ ॥

स्मरानलादश्रुजलोदयान्नृणां
हुताशनादाप इति प्रथा यथा ।
स्मरानलोत्पादनतः समीर ते
हुताशनोत्पादकताकथा तथा ॥ ७२ ॥

अतनुशराग्रविद्धवपुषेत्य विदर्भभुवं
सुखमनुभूयतेऽद्य हरिणाग्रसरेण चिरम् ।
इति स निशम्य केलिवनपालिवधूवचना-
न्यभजदमन्दमन्तरचिरेण हरिः प्रमदम् ॥ ७३ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
द्वितीयः सर्गः ॥

## तृतीयः सर्गः ॥

---

अथालुलोके हरिरद्भुतैक-
निदानमानन्दनिधानमक्ष्णोः ।
उद्गीर्णकर्णामृतसुक्तिगुम्भैः
क्रीडाधुरीणं धुरि कीरधुर्यम् ॥ १ ॥

गारुत्मतग्रावगणाभिराम-
कायस्फुरत्कान्तिपरम्पराभिः ।
वतंसदूर्वाङ्कुरवारशङ्कां
विश्राणयन्तं विपिनेन्दिरायाः ॥ २ ॥

प्रवालभङ्गद्युतिभङ्गचुञ्चु-
चञ्चूपुटीचञ्चदभीशुपुञ्जे ।
आरामशौकं कलमाग्रशङ्कि
हसन्तमच्छच्छविभिश्छदाग्रैः ॥ ३ ॥

प्लुष्टस्य कन्तोः पुनरुद्भवं किं
संभावयत्सात्वतसार्वभौमात् ।

अग्रे समागादिदमौपवाह्य-
मित्यादिशन्तं धियमीक्षकाणाम् ॥ ४ ॥

वपुष्यमुष्याञ्चितपञ्चवर्णे
वचस्यपि स्यन्दिसुधाक्तवर्णे ।
समीक्ष्य सक्तं सममक्षिकर्ण-
मीर्ष्याकुलेवात्वरयत्त्वगीशम् ॥ ५ ॥

निकुञ्चिताङ्गं निभृतं जिघृक्षोः
करे हरेः कीरकिशोर एषः ।
कौटिल्यमेतन्नखकोटितः स्वां
त्रोटिं तदाध्यापयितुं नु तस्थौ ॥ ६ ॥

बाधाकरः प्राग्बहुधा वियोगः
प्रभोरतानीत्प्रमदं तदानीम् ।
तपन्निदाघे तपनो जगत्यां
परां मुदं प्रावृषि किं न सूते ॥ ७ ॥

आलोकनादुत्तमथाधिपाणि
प्रतिष्ठितेरङ्कुरितं प्रहर्षम् ।
विवर्धयामास विभोः शुकोऽयं
वचःसुधासेकविधाविधानात् ॥ ८ ॥

पद्मासनः सद्मगते मयि प्रा-
क्पदक्रमव्युत्क्रमशङ्किचेताः ।
अद्धापदिश्याशु बभूव शिष्टा-
नध्यायमध्यापनतो निवृत्तः ॥ ९ ॥

श्रुतिस्वरग्रामविशेषजाति-
रागव्यवस्थाविषयेऽपि वादे ।
सद्यः परिच्छेदसमग्रधीकं
तुष्टाव तुष्टा वनिता विधेर्माम् ॥ १० ॥

अदभ्रनृत्तभ्रमिविभ्रमेषु
संध्याभ्रकुंसो भ्रमतः समं मे ।
अम्बोत्तरीयाञ्चलमारुतेभ्यः
पक्षानिलाय स्पृहयत्यजस्रम् ॥ ११ ॥

चरन्तमग्रे चतुरं गिरं च
किरन्तमूरीकृतमाधुरीकम् ।
एणाङ्कचूडैणविलोचना मां
वीणां विहायाशु करे करोति ॥ १२ ॥

अपूर्तिक्रियाहार्यमनङ्गजेतुः
शशाङ्कलेशच्छलरत्नदीपम् ।

शश्वन्मयि च्छादयति च्छदाभ्यां
नगेन्द्रकन्या मुमुदे नवोढा ॥ १३ ॥

मनोभुवो मानवती स्वकीरं
मया जितं मन्मथतन्त्रवादे ।
प्रतिक्षणं पत्रपुटे स्पृशन्ती
त्रपाभरं तस्य पराकरोति ॥ १४ ॥

सुधान्धसां सूनविपाठतन्त्र-
पाठेन पाठीनविवर्तनेत्राः ।
व्रीडानि गूढात्महृदो नवोढाः
प्रौढाः पुराकारिषत क्षणेन ॥ १५ ॥

जाने भवन्तं च जगत्त्रयैक-
निदानमाम्नायनुतापदानम् ।
नृशंसकंसादिनरेन्द्रसंस-
न्मदापनोदाय कृतावतारम् ॥ १६ ॥

न नन्दसि त्वं द्विजराजदृष्ट्या
न प्रीयसे किं च वनप्रियेषु ।
न मोदसे पावनचर्ययापि
केयं विभो केवलचित्तता ते ॥ १७ ॥

समीरचारेऽपि सवैमनस्यो
  निरन्तरध्याननिविष्टचेताः ।
सदा(ऽऽ)श्रमस्थः समुपैषि किं त्वं
  रमेश कान्तारहितस्य वृत्तिम् ॥ १८ ॥

वलक्षभावो भवतो व्यनक्ति
  नाथ स्मरेषोर्नवलक्षभावम् ।
अनङ्गतापं च बताङ्गतापो
  विनैव वाचं विशदीकरोति ॥ १९ ॥

अये जगन्नाथ सदा(ऽऽ)शयेन
  लक्ष्मीं नवाम्भोजभवां दधानः ।
स्थाने भवान्द्वेष्टि तुषारधाम्ने
  कथं नु चक्रे कलयत्यनास्थाम् ॥ २० ॥

नरेन्द्रभूरच्युत रुक्मिणी या
  तस्यामपीच्छा तव चेदुदीता ।
विधाय पृष्ठे विहगेन्द्रवत्त्वां
  नयामि किं ताम्यसि लोकनाथ ॥ २१ ॥

इतीरयन्तं शुकमिङ्गितज्ञं
  पत्युर्यदूनां प्रतिवक्तुमिच्छोः ।

लास्यानि वाण्या लपने चिकीर्षो-
स्तिरस्कारिण्या त्रपया बभूवे ॥ २२ ॥

त्रपाभरच्छद्मतिरस्करिण्या-
मपाकृतायामसमायुधेन ।
वाणी नटी तद्वदने विधातुं
पदक्रमं प्राक्रमत क्षणेन ॥ २३ ॥

विदर्भसुभ्रूविवशाशयं मां
विवृण्वतः श्लेषविशेषभङ्ग्या ।
प्रश्नस्य किं ते फलमन्यदस्म-
दपत्रपापाकृतिमन्तरेण ॥ २४ ॥

यदा स्पर्शे रुक्मियवीयसी सा
कथाप्रसङ्गे कथिता तदैव ।
कुत्रापि तादृक्कुसुमास्त्रबाण-
विलासिता विद्रवति स्म लज्जा ॥ २५ ॥

आस्तां प्रसङ्गोऽयमनेन किं ते
प्रयोजनं बुद्धविबोधनेन ।
फलानुयोगेन भवत्प्रवृत्तेः
पर्युत्सुकत्वं भजते मनो मे ॥ २६ ॥

इतीरयन्तं हरिमेष कीरो
गिरं सुधासारकिरं बभाषे ।
अज्ञातमप्यस्ति जगत्सु किं ते
वात्सल्यतो मां वरदानुयुङ्क्ष्वे ॥ २७ ॥

राजत्यनर्घा नगरी रमाया
नाट्यस्थली कुण्डिननामधेया ।
पत्रावलीव प्रथते विभक्त-
वर्णस्थितिर्या वसुधाङ्गनायाः ॥ २८ ॥

सौधेषु सौधेषु शुचिस्मितानां
सौन्दर्यमालोक्य सुरावरोधाः ।
आश्चर्यतो निश्चलतामवाप्ता-
श्चित्रश्रियं यत्र चिरं भजन्ते ॥ २९ ॥

सौरभ्यलोभात्सुदतीकचानां
भ्रमन्नदूरे भ्रमरप्रपञ्चः ।
असंशयं नीलिमसंप्रदाय-
मध्येतुमन्ते वसतीव यस्याम् ॥ ३० ॥

चकोरनेत्रा चरणारविन्द-
स्वभावशोभासुलभावमानाः ।

लाक्षारसा गाढनिरूढलज्जाः
पदे पदे हन्त गलन्ति यस्याम् ॥ ३१ ॥

नखेन्दुरेखाकिरणप्रणाली-
शतेन नीतां शतपत्रशोभाम् ।
प्रभापदेशेन वमन्त्यमार्न्ती
पदे पदे यत्प्रमदापदानि ॥ ३२ ॥

कङ्केलिपुष्पस्तबकावलीषु
कर्तुं ध्रुवं दोहददायकेषु ।
यदीयकान्ताचरणेषु यत्ना-
न्न्यधत्त रागं निखिलं विधाता ॥ ३३ ॥

निजोचितावासनिरीक्षणाय
नित्यं चरित्वा निखिलां त्रिलोकीम् ।
यत्र स्थितामीक्षितुमात्मकन्यां
प्राप्तः पयोधिः परिखापदेशात् ॥ ३४ ॥

सौधे मणिच्छायतमोभिभूतो
ह्रियारुणाश्मद्युतिवीतिहोत्रम् ।
आविश्य यस्यामरुणोऽतितापा-
द्वज्रप्रभावारिषु मज्जतीव ॥ ३५ ॥

सौधा यदीया वसुधासुधानां
सिताभ्रुतानां सहिता रसेन ।
सुधां सुधांशोर्जडिमापनुत्त्यै
प्रायः पताकारसनैर्लिहन्ति ॥ ३६ ॥

ऊधःसु यत्रोरुषु दुग्धसिन्धु-
र्गूढो गवां कुम्भभवाद्विभीतः ।
राकाविधुं राहुभियापहाय
पुण्ड्रेक्षुकाण्डेषु पुनः सुधापि ॥ ३७ ॥

रामायणाभ्यासकृतोऽपि यत्र
रामानुरागप्रवणा न पौराः ।
न जानते भीमगदाभिघात-
कथां तथा शीलितभारताश्च ॥ ३८ ॥

भजन्ति युक्तं प्रमदं गुरूक्तौ
यत्पौरलोका विबुधा यदेते ।
इदं तु चित्रं यदमी नितान्तं
कुर्वन्ति काव्योक्तिषु कौतुकानि ॥ ३९ ॥

नान्यत्र पाथोरुहनालदण्डा-
दाकर्ण्यते कण्टकसंकथापि ।

हा विस्मृतं कान्तदृढोपगूढां
तन्वीतनूमध्यपहाय यस्याम् ॥ ४० ॥

पातालसंलक्ष्यफणिप्ररोहः
स्फुरत्प्रवालः सुमनोञ्चिताग्रः ।
मनोज्ञमुक्ताफलमांसलो य-
त्सालो मणिच्छाययुतः समिन्द्धे ॥ ४१ ॥

कल्पद्रुपुष्पैः कलिताधिवासं
महेन्द्रदन्तीन्द्रमदाम्बुपङ्कम् ।
सौधाग्रलग्नं सुदृशो यदीया
गृह्णन्ति दिव्यैणमदभ्रमेण ॥ ४२ ॥

धृत्वा कराग्रेण दृढं किरीटं
भूम्ना समुत्तम्भितपूर्वकायाः ।
पाकारिसौधाग्रजुषः सुधाशाः
पश्यन्ति यत्सौधशिखां प्रयासात् ॥ ४३ ॥

आवासयत्यद्य पुरीमणीं ता-
मावासयन्सर्वदिशो यशोभिः ।
सेवासमायातसमस्तभूपो
भूवासवो भीष्मपदाभिधेयः ॥ ४४ ॥

विधाय धात्रीं सुरभिं प्रयत्ना-
द्वेनात्मभूरुत्सिषिचे विशेषात् ।
इतीव लोकत्रितयीमयत्ना-
द्यशोभरैर्यः सुरभीकरोति ॥ ४५ ॥

प्रायः परित्यज्य यदाननश्री-
कदर्थितान्यम्बुजकाननानि ।
यस्यैव वक्षःस्थलमेत्य लक्ष्मी-
रपाकरोत्यस्थिरतापवादम् ॥ ४६ ॥

खड्गो यदीयो युधि वीरवर्ग-
कण्ठाटवीखण्डनजातखेदः ।
कुम्भीन्द्रकुम्भोद्भवमौक्तिकांशु-
चन्द्रातपैर्भ्रान्तिमपाकरोति ॥ ४७ ॥

कराग्रजाग्रत्करवालवल्ली-
मरीचिभिर्मांसलमन्धकारम् ।
निर्वर्त्यते येन रणाङ्गणेषु
निजाभिसाराय जयेन्दिरायाः ॥ ४८ ॥

सहायमेकं समवाप्य चापं
निरङ्कुशं निर्जितशात्रवस्य ।

बलानि सर्वाणि भवन्ति यस्य
विभुत्वमुद्रैकविजृम्भणाय ॥ ४९ ॥

जलाधिराजादुदितेत्यकीर्त्ति-
मपाचिकीर्षुः स्वयमब्धिकन्या ।
राजाधिराजादनघादमुष्मा-
ज्जाताधुना राजति रुक्मिणीति ॥ ५० ॥

अङ्गानि शृङ्गारगृहाणि भूप-
कुमारिकायाः सुकुमारतायाम् ।
वीतोपमानीति वचो मृषैव
परस्परं यत्तुलनां भजन्ते ॥ ५१ ॥

वक्त्रेण मित्रं वचसा शरासं
स्मितेन बाणं श्वसितेन वाहम् ।
प्रपञ्चयन्तीं प्रसवेषुरेनां
निजाधिराज्ये मनुते निदानम् ॥ ५२ ॥

समेत्य पर्वश्रियमुद्वहन्तं
सदा पदाङ्गुष्ठमनिन्दितायाः ।
मुक्त्वा मुहुः कार्श्यकरं खमिन्दु-
र्नखेन्दुनामेन्दति नित्यपूर्णः ॥ ५३ ॥

न भोगरीतिः प्रथते दिवीति
विहाय शीतांशुकला विहायः ।
नतभ्रुवः पादनखा बभूवु-
रादर्शदृश्याः कथमन्यथामी ॥ ५४ ॥

प्राप्तुं तदङ्घ्रिद्वयकान्तिमादौ
प्रवालपालिः कथमेत्य रागम् ।
दिनैः कियद्भिर्विजहाति भूयो
दृढानुरागा न हि पल्लवालिः ॥ ५५ ॥

पदश्रिये पद्मदृशः प्रवाल-
पद्मौ भजन्तौ किल माघवार्कौ ।
तत्संनिधौ तां परमश्नुवाते
स्थिरा न हि श्रीर्मधुसक्तिभाजाम् ॥ ५६ ॥

तत्तादृशीं तारतदीयजङ्घा-
चातुर्यचौर्यात्किमु शालिपङ्क्तेः ।
क्षतिं कठोरैः क्रकचैर्भवित्रीं
संचिन्त्य गर्भाः सहसा स्फुरन्ति ॥ ५७ ॥

ऊरुस्तरुण्याः स्वयमुर्वशीतो
रम्भावमानं रचयेत युक्तम् ।

वद भयत्युज्ज्वलचित्रलेखो-
चितं सदा(ऽऽ)भोगमसौ कथं वा ॥ ५८ ॥

उदञ्चितस्यन्दनचक्रशोभ-
मुदग्रपुंनागविलासयोग्यम् ।
नितम्बवत्या निबिडं नितम्ब-
बिम्बं महीभृत्कटकं विशङ्के ॥ ५९ ॥

कथं नु वा मेखलया कवीन्द्रै-
स्तादृङ्नितम्बस्तुलितस्तरुण्याः ।
यदेकदेशे परमेतदीये
विभूषणत्वेन विलम्बतेऽसौ ॥ ६० ॥

पयोधरोत्सेधभवो विमर्दो
भवेदिहापीत्यनवेक्षमाणम् ।
मध्योऽभवद्व्योम मृगीदृशोऽस्या
विचारभाजोऽपि भवेद्विमोहः ॥ ६१ ॥

पयोधरप्रावरणोपरोध-
प्रतिक्रियासाग्रहमम्बरं किम् ।
आश्रित्य मध्यं वलिजुष्टमस्या-
स्तदावृतिं संप्रति तन्तनीति ॥ ६२ ॥

उरोजकुम्भावुपकण्ठलोल-
  नक्षत्रमालाललितौ नताङ्ग्याः ।
स्वर्णाचलयोर्मस्तकरीतिमस्याः
  स्वैरं भजन्ते सुरतोपभोग्याम् ॥ ६३ ॥

वक्षोरुहौ वारिजलोचनायाः
  सुरालयश्रीभरमाहरेते ।
समस्तचक्रद्विजसंपदं च
  नन्वेवमुद्वृत्ततमस्य वृत्तिः ॥ ६४ ॥

लक्ष्मीविलासालयकोशलक्ष्मीं
  चक्रश्रियं भूमिभृतां रमां च ।
उरोरुहावुत्पललोचनायाः
  प्रायेण लब्ध्वा भवतः प्रवृद्धौ ॥ ६५ ॥

घोढातिगाढेनकरोपमर्दा-
  वप्यङ्गनारत्नकुचौ न कोकौ ।
अम्भोजकोशावपि तु ध्रुवं य-
  न्निशानुषङ्गे भजतो न भेदम् ॥ ६६ ॥

कुचाचलप्रान्तभवौ कुमार्या-
  बाहाख्यलावण्यरसप्रवाहौ ।

शृङ्गारराजोपचितोरुरम्भा-
समीपसारस्यकृतौ विभातः ॥ ६७ ॥

अब्जः किलैको मुखतामवाप्य
भूयो न वक्रो भवतीति बुद्धया ।
अन्योऽपि चान्तः कुटिलत्वदोष-
मपाचिकीर्षुः सुदृशो गलोऽभूत् ॥ ६८ ॥

अभिख्ययानुत्तमया जगत्सु
त्रिषु प्रसिद्धेन सुदृग्गलेन ।
कम्बुं दराभिख्यमथा(ऽ)प्रसिद्धं
कथं कवीन्द्राः कथयन्ति तुल्यम् ॥ ६९ ॥

द्विजेन केनापि हृतिः पुरासी-
द्दिवीति भेजे सुधयाधरोऽस्याः ।
नाबोधि किं नाथ तया भवित्री
हृतिर्द्विजैरत्र च तावकीनैः ॥ ७० ॥

जातानुषङ्गः शुचिभिर्द्विजौघै-
र्जपानुषङ्गस्फुरितोऽधरोऽस्याः ।
मन्ये मुकुन्दातनुमन्त्रसिद्धया
भजेत योगं भवदाननेन ॥ ७१ ॥

नवांशुकालीमरुणां मुखे या
प्रपञ्चयत्यञ्जदृशो रसज्ञा ।
अस्तोकबन्धूकजपाभिरामा
सा शारदोल्लासवती न किं वा ॥ ७२ ॥

मन्ये सुकेशीमणिनासिकाया:
कोपोऽधिकश्चम्पककुड्मलेषु ।
इमं समाभिख्यमियं यतोऽधः
करोति हेमाभरणापदेशम् ॥ ७३ ॥

राजोपजीवीनि नवोत्पलानि
राजीवमप्युद्यदिनावलम्बम् ।
विलासवत्या नयनं व्यजेष्ट
नयोपपन्ना जयिनो ननु स्युः ॥ ७४ ॥

श्वासानिलामोदवशादुपेतै-
र्नासासुधागण्डफलीविभीतैः ।
छलेन चिल्ल्योरलिभिर्निलीनैः
शङ्केऽलिकान्तं निटिलान्तमस्याः ॥ ७५ ॥

अधः कृतं नासिकयाबलाया:
कान्तत्वमभ्येत्य पुनः कथंचित् ।

तिलं ततोऽपि स्थितिमाच्छदुच्चै-
रलीकभाजो हि भवन्त्यजय्याः ॥ ७६ ॥

अक्ष्णार्जुनेन प्रहितानपाङ्ग-
बाणानकुण्ठानपि गण्डपाल्याम् ।
स्फुरन्नदूरे कवचेन नित्यं
नवेन कर्णौ निरुणद्धि तस्याः ॥ ७७ ॥

परामृतासक्तिमयन्तमिन्दुं
पद्मं च नालीकतया प्रतीतम् ।
आस्येन सालीकजुषा धुनाना
सत्यादरं नोत्सहतेऽधुनैव ॥ ७८ ॥

तमःसु पक्षं बहुलं भजत्सु
तथा सपक्षेषु मधुव्रतेषु ।
समत्वमालक्ष्य सरोरुहाक्ष्याः
करोत्यवज्ञां कुटिलः कचौघः ॥ ७९ ॥

सैषा गते कर्णपथं गुणे ते
योषामणी कामशरेण विद्धा ।
माराहितान्तःपुरमद्रिकन्या-
माराधयत्याप्तुमना वरं त्वाम् ॥ ८० ॥

तदीयतत्तादृशभक्तिमुद्रा-
तरङ्गितोद्दामदयापयोधेः ।
आज्ञावशादागममम्बिकायाः
प्रज्ञानिधेऽहं भवतः सकाशम् ॥ ८१ ॥

निवेद्यते चेन्निखिलापि तन्व्या
हरे दशा कामवशंवदायाः ।
शतं समानामपि नालमेव
सामान्यतोऽथाप्यवधारयैनाम् ॥ ८२ ॥

चित्रे भवन्तं लिखितं चिराय
निध्याय निध्याय नितम्बवत्याः ।
प्राप्ता दृशाकार इवानिमेष-
भावेऽपि मीनप्रतिमानमुद्रा ॥ ८३ ॥

सखीजनानां सरसोक्तिगुम्फे-
ष्वनुत्तराया हरिणेक्षणायाः ।
त्वद्वर्णनाकर्णनसौमनस्य-
मकुण्ठतायां श्रवसः प्रमाणम् ॥ ८४ ॥

मधुद्विषे मामकवाचिकानि
निवेदयेदेष न वेत्यवैतुम् ।

तया निसृष्टेन तरस्वितायां
   चिरं विचारो निजचेतसा मे ॥ ८५ ॥

बाष्पाम्बुसिक्ते हृदि बिम्बितं स्वं
   नम्रानना सा नयनासिताब्जम् ।
चित्ते विधातुं किल कीलितं त्वां
   चेतोभुवा सृष्टमवैति शस्त्रम् ॥ ८६ ॥

समग्ररागेण सदा(ऽऽ)शयेन
   भवान्कपोलश्च भृतः सुदत्या ।
त्वं रञ्जयसे तत्र परस्तु चित्रं
   वैमल्यमेवाश्रयते विशेषात् ॥ ८७ ॥

चिन्तामृषादूतिकयैव चेत-
   श्चोरेण योगं सुलभं लभेय ।
आभिः किमित्याहितबुद्धिरद्धा
   सखीरशेषाः समुपेक्षते सा ॥ ८८ ॥

नीलोत्पलाभां निशि निर्निमेष-
   मम्भोजशोभामपनिद्रमह्नि ।
झषश्रियं बाष्पझरीपरीत-
   मजस्रमाविष्कुरुते तदक्षि ॥ ८९ ॥

संभाव्य संकल्पसमागतत्व-
दाचुम्बनाडम्बरमम्बुजाक्षी ।
आकुञ्चयत्यञ्चलमीषदक्ष्णो-
र्निशासु निद्राधिगमेन नैषा ॥ ९० ॥

तन्तन्यमाने तनुमध्यमायाः
संकल्पतस्तावकसंप्रयोगे ।
कृतस्य किं कल्पनयेति मन्ये
स्वप्नो बताप्नोति कदापि नैनाम् ॥ ९१ ॥

प्रपञ्चितोच्चावचमूर्च्छनायां
विपञ्चिकायां विमनायते सा ।
उदञ्चदुत्ताललयेऽपि लास्ये
न किंचिदप्यञ्चति नर्म तन्वी ॥ ९२ ॥

निमीलयत्यक्षि निशाधिनाथं
तमीचरं वीक्ष्य तलोदरी सा ।
समीरणात्त्रस्यति जीवितेश-
समीपतो हन्त समागतात्किम् ॥ ९३ ॥

उदूढनिःश्वासभरोपवन्यां
मृदूदयन्मारुतकंदलायाम् ।

धारालबाष्पाम्बुतरङ्गिताक्षी
   धारागृहे सा तरलेक्षणास्ते ॥ ९४ ॥

चन्द्रातपालेपचमत्कृतोऽपि
   चन्द्रोपलश्चन्दनपङ्कलिप्तः ।
तदङ्गसङ्गाद्द्रुत तत्क्षणेन
   तप्तायसो रीतिमुरीकरोति ॥ ९५ ॥

कृताप्लवा सा हिमवालुकाभिः
   सवालुकायां हिमवापिकायाम् ।
दशाननद्रोहिशरानलार्चि-
   र्दन्दह्यमानाब्धिदशां विधत्ते ॥ ९६ ॥

आक्रम्य तारुण्यबलेन कार्श्य-
   मादौ सुदत्याः किल मध्यदेशम् ।
आसाद्य संप्रत्यतनुप्रताप-
   मखण्डमाक्रामति चाङ्गदेशम् ॥ ९७ ॥

भवत्प्रसङ्गे रहसि प्रसक्ते
   साक्षेपमैक्षिष्ट सखीः पुरा या ।
सैव स्वयं गायति सांप्रतं तु
   यशोऽनिशं ते यदुवंशकेतो ॥ ९८ ॥

हरिः समेतीत्यधिगत्य कीरं
विधुर्विभातीति विलोक्य चन्द्रम् ।
पद्मानुरागी स्फुरतीति भानुं
प्रेक्ष्य भ्रमं गोपयते निजं सा ॥ ९९ ॥

लावण्यसिन्धुर्ललना सुधांशु-
मालोक्य पर्याकुलजीवनास्तु ।
नेत्रोत्पलं मोहतमोभरेण
निमीलितं हन्त कथं नु धत्ते ॥ १०० ॥

चित्ते विधत्ते सुदती यदा त्वां
निस्पन्दतामेति तदा नितान्तम् ।
कथं क्षमा स्पन्दितुमाशयस्थे
विश्वंभराभारभृति त्वयीयम् ॥ १०१ ॥

ध्यानावसानावसरागतत्व-
दालिङ्गनानन्दनमोहभाजः ।
परिस्फुरन्तः पुलकप्ररोहाः
प्राणेषु तस्याः प्रतिभूभवन्ति ॥ १०२ ॥

स्वेदाम्बुसिक्ते हृदये सुदत्या
रतीशिता संप्रति रागबीजम् ।

अङ्कुरयन्किं पुलकापदेशा-
त्पुनः पुनः सिञ्चति बाष्पपूरैः ॥ १०३ ॥

असावपूर्वः स्मरधातुवादी
संताप्य संताप्य रसानुवेधात् ।
सुवर्णमस्याः सुदृशः शरीरं
दुर्वर्णमेव द्रुतमातनोति ॥ १०४ ॥

मधुद्रवैर्मन्मथसायकानां
स्वेदाम्बुभिः सिक्तशरीरयष्टिः ।
तत्पक्षवातैस्तरला तदीय-
पुङ्खैः स्फुरद्भिः पुलकैर्वृता सा ॥ १०५ ॥

मध्ये नभो मन्दसमीरमस्याः
श्वासे सुधादीधितिधाम हासे ।
भ्रुवं नितम्बे च पुरा निधाय
नेत्रे विधात्राद्य निधीयतेऽम्भः ॥ १०६ ॥

अजस्रमध्याशयवेदिकाया
धूमायमानं स्मरधूमकेतुम् ।
बाष्पाम्बुपूरैर्बहुधा गलद्भिः
प्रख्यापयत्याक्षि पयोरुहाक्ष्याः ॥ १०७ ॥

किमत्र चित्रं वद कीरवाणी
विलासिनी साजनि विस्वरेति ।
इदं तु चित्रं यदुनाथ धत्ते
सूक्तीस्तथा सा श्रुतिसंगतापि ॥ १०८ ॥

कृतं मृणालैः किसलैरलं मे
प्रयोजनं किं प्रसवास्तरेण ।
शीताय नालं हिमवालुकेति
सेयं निरुन्द्धे शिशिरोपचारान् ॥ १०९ ॥

अहार्यभाराविव हन्त हारा-
हूनाधुना हृतगजेन्द्रयाना ।
महीभृतं त्वां हृदये बिभर्ति
मनोभवाज्ञामहिमा स एषः ॥ ११० ॥

जानाति यावज्जनतेति शौरे
परिस्फुरत्पाण्डिमगोपनाय ।
अजानती मानसजाग्निदीप्तिं
करोति मुग्धा घनसारमङ्गे ॥ १११ ॥

महीयते माधवसंगतेयं
वल्ली भवत्या पुषिता वराङ्गि ।

आलोकयेत्यालिमुदीरयन्ती
मालोकते माधव कुञ्चितभ्रूः ॥ ११२ ॥

हसत्यकाण्डे हरिणेक्षणा सा
फूत्कृत्य रोदित्यथ साश्रुपूरा ।
गतागतैर्निःश्वसितानि दूरं
मुञ्चत्यथो हन्त भवत्यनीहा ॥ ११३ ॥

आलीजनादेशमपारयन्ती
कर्तुं कटाक्षैरुचितक्रियासु ।
त्वदन्तिकं प्रेषयितुं प्रियोक्ती-
र्ब्रवीति भूयः परिचारिकासु ॥ ११४ ॥

स्वयं किमप्यस्फुटमालपन्ती
पृष्टा पुनर्न प्रतिवक्ति किंचित् ।
समाधिलीनेव ततः क्षणेन
सा सामिसंमीलितलोचनास्ते ॥ ११५ ॥

कर्णातिथित्वं गमिता पुरा य-
स्कथा तथानन्दममन्दमाधात् ।
कीर्त्तिं तदीयां सखि कीर्तय त्वं
गीर्भिः किमन्याभिरिति ब्रवीति ॥ ११६ ॥

आहूय लीलाशुकमादरेण
बाहूपरि न्यस्य बहूपलाल्य ।
त्वदन्तिकं प्रेषयितुं कृतेच्छा
न वाचिकं वक्ति न जोषमास्ते ॥ ११७ ॥

दृष्ट्वा तमालं तरुणी स्पृशन्ती
कर्णान्तलोलानलकान्करेण ।
क्षणं प्रवालं श्रवणावतंसं
करोति वैतथ्यपदेऽभिषिक्तम् ॥ ११८ ॥

पञ्चायुधार्तो विधुरञ्चतीति
चन्द्रं समुद्वीक्ष्य सखीभिरुक्ते ।
सा किंचिदुत्फुल्लविलोचनाब्जा
स्रस्तोत्तरीयाभरणोज्जिहीते ॥ ११९ ॥

संचारिकाप्रेषणसाहसिक्यं
कन्याजनानां न कदापि भव्यम् ।
कामोऽपि मोहं कुरुते बतेति
कर्तव्यमेषा न किमप्यवैति ॥ १२० ॥

तातस्ततेभ्यस्तरुणीमतल्ली
श्रुत्वा तवास्मन्यनुरागशैलीम् ।

अन्यावनीनायककन्यकाभ्यो
धन्याहमेवेत्यभिमन्यते सा ॥ १२१ ॥

शृणोमि चेत्तस्य गुणाननङ्ग-
गुणध्वनिर्मां बधिरीकरोति ।
पश्यामि चित्रे यदि पातकी मे
बाष्पो विरोधीति बताकुला सा ॥ १२२ ॥

दूती मनोवेगवती दुरापा
दूरेतरां द्वारवती पुरी च ।
क्षणोऽपि हा कल्पशतायते मे
करोमि किं वेति करोति चिन्ताम् ॥ १२३ ॥

निमीलयत्यक्षि निशासु नैव
निमेषमेषाथ निमीलयेच्चेत् ।
धनुर्धरं वीक्ष्य पुरः सुमास्त्रं
धावत्यविश्रान्तमितस्ततश्च ॥ १२४ ॥

कदा तदालिङ्गनजातमोद-
सुधासुधावारिधिमग्नचेताः ।
भुजान्तरे तस्य चिरं शयाना
रुजां विनेष्येऽहमितीहते सा ॥ १२५ ॥

राधा न चाहं रतिवल्लभा ते
पथि स्खलन्किं पतितोऽसि यद्वा ।
यावद्वृथा कुप्यति साशु याहि
याहीत्युशन्ती मिषतीयमर्धे ॥ १२६ ॥

तमालमग्रे तरुणं समीक्ष्य
तन्वी भवद्भावनया तदैव ।
खिन्नाखिलाङ्गी सवितुः करेण
खिन्नाहमस्मीति सलज्जमाह ॥ १२७ ॥

माकन्द मन्दोऽसि यतो मुकुन्दं
ब्रूषे न मे हन्त यदि ब्रवीषि ।
पुष्पाणि पुष्पायुधसाधनानि
तवैव भूषाः स्युरिति ब्रवीति ॥ १२८ ॥

विनिन्द्यते हन्त वृथा रसालः
समीपमीशोऽस्य समागतश्चेत् ।
निरन्तरं तन्मुरलीनिनादै-
रङ्कुरितः स्यादयमित्यवैति ॥ १२९ ॥

वनप्रिये व्याहरसि प्रियं चे-
त्तवैव लाभो भविता तदानीम् ।

ताम्यन्ति तापेन न मे यतोऽमी
चूतप्रवाला इति वक्ति सुभ्रूः ॥ १३० ॥

प्रियो ममायं नियतं पिकेन
व्यालोकि नानेन विलोकितश्चेत् ।
तदीयवंशीरवजातलज्ज-
स्तारं न कूजेदिति मन्यते सा ॥ १३१ ॥

ब्रवीषि चेद्बर्हिण वल्लभं मे
तदा समादाय तवैव पिच्छम् ।
कर्णावतंसं कलयेऽस्य नान्य-
द्यशस्तवास्मादिति याचते सा ॥ १३२ ॥

मुधैव केकिन्मुहुरद्य याचे
नालोकि नाथो भवता स नूनम् ।
आलोकितश्चेदधुना नटेस्त्व-
मित्यालपन्त्यन्यत एति बाला ॥ १३३ ॥

चन्द्रांशुलीलावनचन्दनादि-
वार्त्तासु चार्ता वरवर्णिनी या ।
आरामभूमावनुलिप्तगात्री
चन्द्रातपं संप्रति सेवते सा ॥ १३४ ॥

आशङ्क्य भृङ्गारवमङ्गजात-
मौर्वीलताटंकृतिमेव गुर्वीम् ।
ध्यानागतत्वत्परिरम्भणाय
दीना मुधा धारयति स्म बाहू ॥ १३५ ॥

पश्याम्यलिश्यामलमालि कंचि
त्स्वप्नो नु नाप्नोमि कदापि निद्राम् ।
भ्रमो नु नोदेति कदापि बाधा
मायेव मारस्य तदित्यवैति ॥ १३६ ॥

शौरे पल्लविताभिरुक्तिभिरलं चेदीशितुः श्वः पिता
रुक्मी दातुमिमां व्यवस्यतितमां रोषानुषङ्गात्त्वयि ।
भाग्यं यद्गरुडे मदन्वयगुरौ भक्तानुरक्त्या कृथा-
स्तादृग्भाग्यभरांशभाजमधुना तन्यास्तदारुह्य माम् ॥

अथाण्डजविभुध्वजस्तमधिरुह्य कीरं रया-
दाह्विण्डत स कुण्डिनं पुरमखण्डभूमण्डनम् ।
अनुक्षणमदःशुकादमुमुदन्तमाकर्णय-
न्त्यविन्दत विदर्भजाप्यरममन्दमानन्दथुम् ॥

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु
रुक्मिणीकल्याणनाम्नि काव्ये
तृतीयः सर्गः ॥

# चतुर्थः सर्गः ।

---

अपरेद्युरथाभिवन्द्य गौरी-
पदयोर्भीमसुतां निवर्तमानाम् ।
प्रददर्श हरिर्निजागमाशा-
भरतो दिक्षु विदिक्षु दत्तदृष्टिम् ॥ १ ॥

सुदतीसुषुमासुधाझरीभिः
सुचिरं संपरिपूर्य दृक्तडागम् ।
परिवाहितहर्षबाष्पपूरो
मनसैवं निजगाद मानवेन्दुः ॥ २ ॥

पदपद्मयुगेन पक्ष्मलाक्ष्या-
स्तुलितस्तूलभरः परं म्रदिम्ना ।
तुलनाममुना त्विषापि लब्धुं
ध्रुवमारज्यति यावकद्रवेण ॥ ३ ॥

मृदुतोपगतोपमेयभाव-
प्रभवागःप्रशमाय तूलपुञ्जः ।

उपदीकुरुते किमुत्पलाक्ष्याः
 सरसालक्तकसंपदं पदस्य ॥ ४ ॥

पदयोरनयोः पयोरुहाक्ष्याः
 किसलं हन्त कियद्दिनैकहृद्यम् ।
कथयन्ति समं कवीश्वरा य-
 त्फलमेतत्तु पचेलिमं म्रदिम्नः ॥ ५ ॥

वदनेन्दुपराजितो वराङ्ग्याः
 स्वयमङ्गुष्ठनखाकृतिः सुधांशुः ।
परिवीजयति प्रभापदेशा-
 त्पदयोः पद्मजितोर्दुकूलपट्टीम् ॥ ६ ॥

चकितैर्गतिचातुरीभिरस्या
 हरिणाक्ष्याः किमु राजहंसयूथैः ।
जलदुर्गमभाजि सिन्धुरेन्द्रै-
 र्गिरिदुर्गं वनदुर्गमप्यगाहि ॥ ७ ॥

सुदतीगतिसौकुमार्यचौर्या-
 द्वनदुर्गाश्रयिणोऽपि वारणेन्द्राः ।
बत शृङ्खलिता बलाद्गृहीत्वा
 महिपैर्युक्तमिदं मदान्धतायाः ॥ ८ ॥

गजराजवधूगभीरगत्या
  गतिचातुर्यकृतस्पृहा मरालाः ।
पदपद्मसहोदरैरमुष्याः
  प्रथयन्ति प्रणयं ध्रुवं पयोजैः ॥ ९ ॥

प्रपदद्वितयद्युतिप्रकर्षं
  प्रसमीक्ष्य प्रमदामणेरमुष्याः ।
कमठैरजनि त्रपावशात्किं
  करणेष्वेव निजेषु संकुचद्भिः ॥ १० ॥

अदसीयमलासहिं तुलां किं
  पदपद्मं प्रसमीक्ष्य किं नु साक्षात् ।
समभावि तिरोहिताकृतिभ्यां
  सततं गुल्फसुधामणीतुलाभ्याम् ॥ ११ ॥

स्खलवल्लघुमुच्चतां नयन्त्या
  कलयन्त्या गुरुमध्यधस्तथैव ।
तुलया तुलयन्ति मामितीव
  त्रपया गुल्फयुगं निगूढमस्याः ॥ १२ ॥

प्रपदं ब्रुडिचातुरीधुरीणं
  नखपङ्क्तिर्नवशुक्तिभङ्गभङ्गिः ।

अपि गुल्फयुगी कुलीरकेलि-
श्चरणोऽस्या धृतरागसागरश्रीः ॥ १३ ॥

मणिनूपुरमञ्जुलालवाले
सुषुमाम्भोभरिते पदे सुकेश्याः ।
रतिमन्मथरोपितौ विलासा-
न्नु जङ्घे नवगर्भशालिशाली ॥ १४ ॥

इषुधिर्ध्रुवमेतदीयजङ्घा-
युगलेन प्रतियुध्य दुर्जयेन ।
शरसंततिदन्तुरान्तरङ्गः
समभूदुद्भटयोधपृष्ठलम्बी ॥ १५ ॥

अतिकर्कशया मयानवाप्यां
वहतीयं वनितोरुकाण्डशोभाम् ।
इति नूनमुदञ्चिताभ्यसूया
करिशुण्डा कदलीवनं लुनीते ॥ १६ ॥

कुलभूमिधरस्य कूटलक्ष्मीं
कुचकुम्भावुपरि स्थितौ दधाते ।
इति युक्तमधः स्थितेन दध्रे
सुदृशः श्रोणिभरेण वप्रशोभा ॥ १७ ॥

विजिता ततिरद्रिमेखलानां
विपुलाक्षीमणिमेखलापदेन ।
अभिधां दधती किलादसीया-
मखिलैरप्यभिधीयते नितम्बः ॥ १८ ॥

कलये सुदृशो नितम्बबिम्बं
कलितां काममहोत्सवाय वेदिम् ।
स्फुरति स्फुटरोमराजिधूमं
पुरतो यस्किल नाभिहोमकुण्डम् ॥ १९ ॥

अवमत्य वलित्रयत्रिरेखा-
मचिरान्नाभिबिलात्समुज्जिहानः ।
नवरोमलताफणी नताङ्ग्याः
स्तिमितो नु स्तनमण्डलावलोकात् ॥ २० ॥

कुचकुड्मलकूटसंपुटे द्वे
कुतुकान्निक्षिपता कुशेशयाक्ष्याम् ।
जगृहे नवरोमराजियष्टि-
र्जनसंमोहकरेण यौवनेन ॥ २१ ॥

प्रमदामणिनाभिगाधतत्त्व-
प्रतिलम्भाय नवेन यौवनेन ।

विधृता बलवैरिनीलयष्टी
रुचिरा राजति रोमराजिरूपा ॥ २२ ॥

स्तनयोरनयोः किमन्तराले
तनुरप्यस्ति मृगीदृशोऽवकाशः ।
इति बोद्धुमिवोपनीयमाना
मणिसूची मदनस्य रोमराजिः ॥ २३ ॥

नवयौवनशिल्पिना नताङ्ग्याः
कुचसौधं कुसुमायुधाधिवासम् ।
सुषुमाम्बु निनीषुणाधिनाभि-
ग्रहि रोमावलियन्त्रकं प्रणीतम् ॥ २४ ॥

नतनाभिमुखाञ्चिता नताङ्ग्या
मुरली रोमलता वयोमुरारेः ।
मिषति त्रिवलीमिषादमुष्या-
मनिशव्याप्रुतमङ्गुलित्रयं किम् ॥ २५ ॥

अनुकाञ्चि समञ्चनीयमस्याः
समया नाभिबिलं सरोरुहाक्ष्याः ।
त्रिवलीवलयाङ्कितः समिन्द्धे
रुचिरो रोमलतैकचूतनाथः ॥ २६ ॥

कुसुमायुधभूपदुर्गसीम्नोः
कुटिलाक्ष्याः कुचभूभृतोरमुष्याः ।
असितांशुकृताधिरोहणीयं
नवरोमावलिनाटिकावहास्ते ॥ २७ ॥

अपनेतुमिवायशः स्वकीयं
घनसारप्रतिकूलतोपजातम् ।
लिकुचं कुचतां गतं च चित्रं
कनकाङ्ग्या न जहाति पूर्ववर्णम् ॥ २८ ॥

शशिशेखरशेखरोपयुक्त-
च्छदजातार्पणसंभृतैस्तपोभिः ।
दधते नियतं फलानि बिल्वा
दयितोरोरुहदत्तसौहृदानि ॥ २९ ॥

कुचकुट्मलतो भिया कृशाङ्ग्याः
कुहचिच्चक्रयुगं जले निमग्नम् ।
इह संकुचदेक्ष्य सायमब्जं
भृशमाक्रोशति तद्भ्रमेण नूनम् ॥ ३० ॥

नवयौवननामसूत्रधारो
नलिनाक्ष्यामिह नाटयन्विलासान् ।

अधित स्तनतालयुग्ममारा-
दजहज्जम्बनरोमराजिसूत्रम् ॥ ३१ ॥

नतनाभिमणेः स्फुटे मुखेन्दौ
न वियुक्तौ कुचकोकदम्पती यत् ।
अनिशं च पुरोऽधराञ्चलेऽस्मि-
न्नरुणांशुस्फुरणस्य वैभवं तत् ॥ ३२ ॥

कुचकुट्मलयुग्मकांदिशीकौ
कुटिलाक्ष्या जलजातकोशचक्रौ ।
मिलितावुचितं मृणालवल्ली-
लहरीभ्यां भुजवल्लरीजिताभ्याम् ॥ ३३ ॥

मणिहारमरीचिकापरीतौ
स्तनकुम्भौ तरुणीमणेरमुष्याः ।
स्मरमङ्गलशातकुम्भकुम्भौ
स्मरणीयौ कुरुतो निबद्धतन्तू ॥ ३४ ॥

सुदृशः सुषुमाम्बु नाभिकूपा-
च्छुभरोमावलिशुण्डयोपगृह्य ।
कुरुते मणिहारशीकरालिं
कुचकुम्भोपरि किं वयोगजेन्द्रः ॥ ३५ ॥

नलिकं नवरोमराजिदम्भा-
त्कलयन्मानखगं ममाभिहन्तुम् ।
गुलिका व्यतनिष्ट हारवल्ली-
गुरुमुक्ताभरतः स्मरः कृशाङ्ग्याः ॥ ३६ ॥

लसमानभुजद्वयीलताभ्यां
बिसवल्ली यदजीयत प्रियायाः ।
तदियं त्रपया जले निमग्ना
तनुमाविष्कुरुतेतरां वलक्षाम् ॥ ३७ ॥

अदसीयकराङ्गुलीक्षुखण्डाः
प्रतिपर्वप्रथमानभूरिशोभाः ।
नखकंदलपङ्क्तिनामधेयां
नवमुक्ताफलराजिमुद्गिरन्ति ॥ ३८ ॥

ललितां ललनाललाटरेखां
कलयन्निन्दुकलान्तरैः कियद्भिः ।
करयोः किमु कंदलं नखानां
विदधे वारिजविष्टरोऽवशिष्टैः ॥ ३९ ॥

परपुष्टवधूशुकावरोधाः
प्रमदामौलिमणेर्वचोविधेयाः ।

किमदोधरबिम्बकान्तिचोरं
किसलं बिम्बफलं च खण्डयन्ति ॥ ४० ॥

अधरो बहुधा निपीयमानो-
ऽप्यधिकोद्भिन्नरसो यदत्र हेतुः ।
निटिलेन्दुकलानिरन्तरोद्य-
न्निबिडासारसुधारसाभिषेकः ॥ ४१ ॥

विधिवामदृशो विहारभाजः
पदलाक्षारसपाटला रसज्ञा ।
द्रढयत्यमला च दन्तपङ्क्तिः
स्फुटमस्याः स्फटिकाक्षदामलक्ष्मीम् ॥ ४२ ॥

सुदृशो रसनानिवासिवाणी-
शुकपोताग्रभुवि न्यधायि धात्रा ।
किमु दाडिमबीजराजिरस्या
दशनाख्या दशनच्छदेन बिम्बम् ॥ ४३ ॥

रमणीहृदयानुरागवल्ल्या
रसना शंसति पल्लवानुबन्धम् ।
अमला पुनरावलिर्द्विजानां
कुरुते कोमलकुट्मलालिशङ्काम् ॥ ४४ ॥

मयि कांचन-विक्रियां निनीषु-
मदनः किं नु मृदुस्मितांशुदुग्धे ।
कुरुते गुलिकां रसेन बद्धां
गुरुनासामणिकैतवादमुष्याः ॥ ४५ ॥

अवदाततमानि वस्तुजाता-
न्यखिलान्याददात्मभूरमुष्याः ।
विरचय्य दृतस्ततोऽवशिष्टै-
र्विदधे मौक्तिकमेव नासिकायाः ॥ ४६ ॥

स्मितकान्तिसुधारसे सुदत्याः
किमु नासामणिकैतवेन मूतम् ।
स्वयशःकलमाङ्कुरोदयाय
स्वयमेवैष निमज्जयत्यनङ्गः ॥ ४७ ॥

अबलामणिनासिकाभिरूप्यं
प्रसमीक्ष्यापि शुचा तिलप्रसूनम् ।
शतधा यददीर्यत क्षणान्नो
वहते [illegible] कल वज्रपुष्पनाम ॥ ४८ ॥

मृदुगन्धवहादसीयनासा-
कुहनाकाञ्चनकुट्मलेऽक्षिलक्ष्ये ।

कथयन्ति सुदुर्लभं कथं वा
सुरभित्वं सुधियः सुवर्णपुष्पे ॥ ४९ ॥

अतनोद्विधिरेतदक्षि नीलो-
त्पलरक्तोत्पलपुण्डरीकसारैः ।
अथ ते परथा कथं विनीलं
क्वचन क्वाप्यरुणं क्वचित्सितं च ॥ ५० ॥

अवतंसितमुत्पलं किमारा-
दवलोक्याञ्चितमुत्पलोपमाक्ष्याः ।
अधिकर्णतया दृगञ्चलाभ्या-
मजनि त्रासवशेन चञ्चलाभ्याम् ॥ ५१ ॥

अतिदारुणमीषदञ्चलेऽस्याः
प्रमदाया नयनं गतेर्निरोधात् ।
अवतंससितेतराब्जदम्भा-
दधिरुह्य श्रवणं प्रतिष्ठते किम् ॥ ५२ ॥

नयनेन नवोत्पलं नताङ्ग्या-
स्तुलितं चित्तभुवा ध्रुवं तुलायाम् ।
अवतंसनिभेन किंचिदुच्चै-
रजनिष्ट स्फुटमावहल्लघुत्वम् ॥ ५३ ॥

ललनातिलकस्य चारुचिल्ली-
लतया विभ्रमसंपदेकधाम्ना ।
सदृशी कथमस्तु शम्बरारे-
रविकर्णोपनता शरासवल्ली ॥ ५४ ॥

उपजातमलिव्रजोपरोधा-
दयशश्चम्पकमात्मनोऽपनेतुम् ।
ललनामणिनासिकायमानं
लसति भ्रूलतिकालिमालिकाभ्याम् ॥ ५५ ॥

अयशो भृशमस्य चम्पकस्य
प्रचितं माधुकरप्रचाररोधात् ।
अबलामणिनासिकात्मताया-
मपि चिल्लीकपटान्निरीक्ष्यतेऽग्रे ॥ ५६ ॥

नियतं निटिलश्रियं चतुर्थी-
शशिलेखा शतपत्रलोचनायाः ।
अपहृत्य सतामभूदनीक्ष्या
न तु सद्भिः प्रसमीक्ष्यते सदोषा ॥ ५७ ॥

चिकुरप्रकरश्रियोऽनुकारा-
च्चमरी मुग्धचमूरुलोचनायाः ।

निजवालभरेऽपराङ्गकेभ्यो
नियतं प्रीतिमनुत्तमां विधत्ते ॥ ५८ ॥

कबरीभरकान्तिनिर्जितश्री-
भ्रमरीवालधिरेष चञ्चलाक्ष्याः ।
परिकर्मविधाविधानदम्भा-
त्प्रचुरामस्य चरीकरीति सेवाम् ॥ ५९ ॥

अवलम्ब्य पदाम्बुजातमादा-
वथ रागो हृदयं ततोऽधरोष्ठम् ।
अधिरोहति मौलिमप्यमुष्याः
किमु सिन्दूरपरागकैतवेन ॥ ६० ॥

कालिन्दीजलवेणिकापरिणतिः कान्तामणेर्वेणिका
सीमन्तोऽपि सरस्वतीलहरिका सिन्दूररागारुणा ।
मुक्ताचारुललान्तिकारुचिरियं मूर्तेव मन्दाकिनी
मज्जन्तीह मदीयलोचनयुगी मन्येऽनिमेषायते ॥

कनन्तीं कान्तायाः कचरुचिमसाधारणतया
कवीनां लोको यत्कथयति तदेतन्न हि मृषा ।
सपक्षात्सर्वस्मादपि मधुकराणां समुदया-
द्विपक्षाद्व्यावृत्तिं व्रजति शिखिपिञ्छादपि यतः ॥

सुदत्या लावण्यस्रुतिरनघकेशोच्चयघना-
द्गलन्तीयं मुक्तागणमयललन्तीकपटतः ।
निलीना भ्रूवल्लीनिकटभुवि नासानिभमणि-
प्रणालीतो मुक्ताफलवपुरभिष्यन्दत इव ॥ ६३ ॥

कुचाभोगे पत्रावलिभृति कुलक्ष्माधरधिया
निजं शस्त्रं वज्री नियतममुचच्चीरजदृशः ।
तदेतत्काठिन्यादहह शकलीभूय शतधा
स्फुरत्याकल्पान्ते स्फुटममलवज्रोपलनिभात् ॥

कुलाद्रेरुत्सङ्गं कुवलयदृशो नाभिकुहरा-
त्प्रसर्पन्ती रोमावलिनिभपिपीलावलिरियम् ।
मदीयान्तर्देशे मदनशरवृष्टिं निरवधिं
विना वाचो वृत्तिं विशदतरमेव प्रथयति ॥६५॥

वयोमायी रोमावलिकपटपिञ्छं प्रकटय-
न्विजृम्भन्तौ कुर्वन्वियति कुलभूभृत्परिवृढौ ।
कुहूं किं चातन्वन्सततमुपकण्ठस्थितिमती-
मनूनं शीतांशोरपि कलयते मण्डलमहो ॥६६॥

निर्वर्णयन्निति नितम्बवतीं मुकुन्दो
मन्दाक्षमोदभरमेदुरितान्तरङ्गः ।
अङ्कं नयन्नयमिमामथ कुञ्चिताङ्ग-
मारुह्य कीरवरमात्मपुरीं प्रतस्थे ॥ ६७ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये

चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

---

पश्चादग्रे पश्चिमं पद्मनाभः
पश्यन्नक्ष्णोर्भागधेयं पयोधिम् ।
चञ्चच्चक्षुश्चञ्चलाक्षीमुखेन्दौ
मोचाहंतामोचनीं वाचमूचे ॥ १ ॥

प्रायः पुष्णन्प्राणनाडीं सुराणां
पर्यङ्कत्वं प्राप्नुवन्पद्मनाभेः ।
शंभोः सोऽयं शाश्वतोत्तंसदायी
वाचां दूरे वर्तते वारिराशिः ॥ २ ॥

मन्ये पाथोमानुषीणाममूषां
लावण्यश्रीलालितीलोकनेन ।
जाताशङ्का जातुचिन्नाथवक्षो
लक्ष्मीरस्मिँल्लक्ष्यते नत्यजन्ती ॥ ३ ॥

पश्यामुष्मिन्प्राक्तने कूर्मराजे
क्रीडाभेदैः क्रीतचित्ते दुलीभिः ।

ईर्ष्यारोषादीषदारज्यमाना-
नीक्षाभेदानिन्दिरा तन्तनीति ॥ ४ ॥

स्वैरं मीनस्त्रैणपक्ष्मेषुविद्या
पारीणत्वं पार्श्वतो वीक्षमाणः ।
भूयो धर्तुं भूमिकां मीनयूनो
जातोत्कण्ठो जायते शार्ङ्गधन्वा ॥ ५ ॥

शङ्के कायच्छायमायानिशाया-
मुद्यद्रत्नोद्द्योतशेषप्रदीपः ।
शश्वद्बृह्लन्सन्मनोमीनयूनो
दाशार्होऽयं दृश्यते वारिराशौ ॥ ६ ॥

विष्णोराराद्वीचिलोलत्पताका-
चेलोपान्ते चित्रितो वैनतेयः ।
लक्ष्मीवीक्षालालितीचौर्यचुञ्चू-
न्हन्तुं मीनान्हन्त संनह्यतीव ॥ ७ ॥

गाढोत्कण्ठं कण्ठकाण्डे फणीन्द्रो-
वैकुण्ठीयां वैजयन्तीं निबध्य ।
गायन्तः श्रीकामुकं वारिमर्त्या
झेलालीलादोहदानारभन्ते ॥ ८ ॥

वारं वारं वारिनारीकुमार्यः
कालेयानां क्षालतः शेषमौलौ ।
धूमोद्गारैर्धूसरा वाडवाग्ने
रत्नश्रेणी रञ्जयन्त्यञ्जसा किम् ॥ ९ ॥

प्रायो नाभीपद्मधूलीं मधूल्या
सेकं सेकं शेषशय्याशयस्य ।
पाथोनार्यः पश्य हारिद्रचर्चा-
सौभाग्यानां सौलभीं संलभन्ते ॥ १० ॥

पद्माजानेः पश्य नाभीसरोज-
श्च्योतन्माध्वीस्रोतसा स्वादु पाथः ।
पायं पायं प्रायशो वारिवाहाः
स्वच्छां यान्ति स्वादुवर्षित्वकीर्त्तिम् ॥ ११ ॥

तल्पोपान्ते तादृशे सिन्धुकन्या
नाथस्याब्जन्नाभिनालीकधूलौ ।
वाणीजानेर्वत्सला वारिमर्त्य-
श्रेणीबालाः शीलयन्त्यक्षराणि ॥ १२ ॥

नित्यं नाभीनीरजातान्मुरारे-
र्माध्वीपूरे मांसले स्यन्दमाने ।

सेतुर्धूलीसैकतैर्वारिनारी-
 बालैरेतैर्बध्यते बद्धलीलैः ॥ १३ ॥

धूलीपालीदोहलं निक्षिपन्तः
 सेकं सेकं स्यन्दमानैर्मरन्दैः ।
नाभीपद्मं नायकस्येन्दिरायाः
 पाथोमर्त्याः पङ्कजत्वं नयन्ति ॥ १४ ॥

बद्ध्वावालं बन्धुरं धूलिजालैः
 सेकं सेकं शीधुवारानुवारम् ।
पाथोमर्त्याः प्रापयन्त्यम्बुजत्वं
 प्रायो नाभी पद्ममम्भोजनाभेः ॥ १५ ॥

पुञ्जीभूते भूरिशः शौरिनाभी-
 पद्मोद्भ्रान्ते पांसुजालेऽधिशेषम् ।
कुर्वन्त्येताः कौस्तुभं गूहमानाः
 पाथोनारीबालिका धूलिकेलिम् ॥ १६ ॥

कीर्तिस्फूर्तिं किंनरीगीयमानां
 श्रावं श्रावं शार्ङ्गिणः शान्तरोदाः ।
शेषोपान्ते शेरते वारिनारी-
 बाला नाभीपद्मलोलायताक्ष्यः ॥ १७ ॥

गन्धर्वाणां गायतामिन्दिरेशं
वीणालाबुं व्याजतोऽमी गृहीत्वा ।
अन्ये पाथोमानवीनां कुमाराः
पारावारे पश्य दूरं प्लवन्ते ॥ १८ ॥

शेषस्यामी शीर्षमारुह्य सिन्धो-
र्मध्ये पाथोमर्त्यडिम्भाः सदम्भाः ।
वारं वारं वासुकिक्ष्वेळपङ्का-
नादातुं द्रागात्तगन्धाः पतन्ति ॥ १९ ॥

पश्येदानीं पद्मनाभीयनाभी-
नालीकोच्चैर्नालदण्डैककूपे ।
नह्यन्त्येते नव्यनिर्मोकशाटीं
पाथोमर्त्याः पन्नगाधीशतल्याम् ॥ २० ॥

शय्याभूतः शार्ङ्गपाणेः फणीन्द्र-
श्चण्डैर्वातैश्चालनं शङ्कमानः ।
बद्ध्वा दीर्घैर्ब्रह्मसूत्रैर्विधातुः
सिन्धौ क्षेप्तुं सीरमद्धा बिभर्ति ॥ २१ ॥

वीचीवातैर्विष्णुनाभीसरोजा-
दूरोद्धूता धूळिकापाळिकेयम् ।

अम्भोवाहेष्वापतन्ती समन्ता-
द्विद्युल्लक्ष्मीविभ्रमं तन्तनीति ॥ २२ ॥

नाथस्येयं नाभिपद्मालिमाला
वारां राशौ वारिवाहच्छलेन ।
अद्धा पाथोहस्तिदानाम्बुधारा-
सारोद्भ्रान्ता संभ्रमाद्बम्भ्रमीति ॥ २३ ॥

फुल्लन्नाभीपुण्डरीकोदराब्ज-
त्पांसुश्रेणीपाटलाभ्रापदेशात् ।
संगृह्णीते सागरः किं कुमारी
भर्त्रे दातुं भर्मशाटीरनेकाः ॥ २४ ॥

वीप्सां लक्ष्म्या विभ्रमादादधानाः
पाथोनारीः पङ्कजाक्षो निरीक्ष्य ।
एता रागादेकदैवोद्धिवक्षु-
र्धत्ते मूर्तीस्तावतीरभ्रदम्भात् ॥ २५ ॥

शेषश्वासैः शीकरैर्धूमतेजः-
पुञ्जैरुच्चैः पुञ्जितैर्बाडवाग्नेः ।
पाथोभिश्च प्रायशो वारिराशौ
संपद्यन्ते सर्वतो वारिवाहाः ॥ २६ ॥

उच्चैर्लीलोद्वर्तिमीनासिधेनू
प्रायो भूयः प्रस्फुरत्कूर्मखेटौ ।
सभ्यं कृत्वा शार्ङ्गिणं युध्यतोऽमू
वल्गं वल्गं वारिमर्त्याङ्ककारौ ॥ २७ ॥

वेल्लद्वीचीविह्वलोऽत्रानुसायं
कुर्वन्विष्णोः कुड्मलं नाभिपद्मम् ।
चक्रे वेधाः संकुचत्सर्वमब्जं
भीतो नूनं भिक्षुकत्वापवादात् ॥ २८ ॥

कोपादारात्कुम्भिमोहाद्धनाली-
दन्तेनाम्भोदन्तिवृन्दैरुदस्ता ।
क्रीडाक्रोडोत्क्षिप्यमाणां धरित्रीं
गाढं चेतो गाहयत्यस्मदीयम् ॥ २९ ॥

निर्मर्यादं निःसरद्भिः समन्ता-
दुच्छ्वासानामूर्मिभिर्भोगिभर्तुः ।
पारावारः प्राप्य वेलां पुनस्त-
न्निःश्वासैः किं नीयते क्षिप्रमन्तः ॥ ३० ॥

पाथोनाथः प्राप्य कूलंकषत्वं
सद्यो दूरं संकुचद्वारिपूरः ।

विश्वस्यैवं वृद्धिहानी भवेता-
मित्येवोच्चैरेष वक्तीव घोषैः ॥ ३१ ॥

शाल्लूराणां तादृशामन्तरब्धिः
पाथोमग्नान्पर्वतेन्द्रान्प्रकाश्य ।
वीचीव्याजाद्व्यक्तमुत्क्षिप्य बाहुं
संग्रामार्थं शक्रमाक्रोशतीव ॥ ३२ ॥

अद्याप्यस्यामन्दमन्थानशैला-
घातोदीता हन्त बाधा न शान्ता ।
घोरारावो घूर्णितोपान्ततादृ-
ग्रत्नच्छायारक्तसिक्तो यदेषः ॥ ३३ ॥

सिन्धुच्छद्मा सिद्धराण्नूत्ननाना-
रत्नच्छायाराजिपिञ्छं दधानः ।
प्रायेणौर्वं प्राक्निगीर्णं विधत्ते
लीलोद्वान्तं लेशतो रत्नदम्भात् ॥ ३४ ॥

पर्यन्तेषु प्रस्फुरत्फेनरेखं
मेघश्यामं मेदुरैरिन्द्रनीलैः ।
पारावारं पक्ष्मलाक्षि क्ष्मायाः
प्रान्तश्वेतं भावये नीलचेलम् ॥ ३५ ॥

वातोद्धूतो वारिधौ भाति वीची-
गुम्भच्छद्मा गूढपात्प्रौढ एषः ।
नो चेदेवं नूतनीं फेनपाली-
निर्मोकालीं निर्मिमीते कथं वा ॥ ३६ ॥

विश्वाक्रान्त्यै विभ्रमादुद्भ्रमन्ती
कल्लोलानां कन्दली सिन्धुबन्धोः ।
वेलारुद्धा व्रीडया पाण्डिमानं
प्रायः प्राप्ता प्रान्तफेनच्छलेन ॥ ३७ ॥

पाथोदालीभव्यपल्याणपार्श्व-
व्यालोलोद्यद्विद्युदुद्दामखड्गैः ।
धाटीभाग्भिर्धारया वारिमर्त्यै-
र्व्यावर्तन्ते वीचिघोटाः सफेनाः ॥ ३८ ॥

नीलीयन्ते लीयमाना नितान्तं
वारां राशौ वारिवाहास्तदूहे ।
पाथोनार्यो बाडवज्वालजाला-
दक्ष्णोरेतेष्वञ्जनान्यञ्जयन्ति ॥ ३९ ॥

वीचीवातैर्विष्वगाधूयमानैः
शीर्णैर्भूयः शीकरैर्वञ्चिताशाः ।

मुग्धा नूनं मौक्तिकेष्वप्यनास्थां
कुर्वन्त्येते कूलभूदाशडिम्भाः ॥ ४० ॥

नित्योद्भिन्नैर्वीरकुम्भीन्द्रडिम्भै-
र्दन्तादन्तिद्वन्द्वयुद्धात्तगन्धाः ।
अम्भोराशेरभ्रमुप्राणनाथो
जाने भेजे जम्भजेतुः सकाशम् ॥ ४१ ॥

पाकारातेः पर्वता भीतभीताः
पातालान्तः पङ्कमभ्याश्रिराय ।
उच्चैर्लीलोन्मज्जदम्भोमदेभ-
व्याजाद्यान्ति व्यक्तिमाश्वासहेतोः ॥ ४२ ॥

पारावारे पर्वता वज्रपाता-
दन्तः पक्षानात्मनो गूहमानाः ।
अर्धोन्मग्ना हन्त शीतालवः किं
संसेवन्ते सानुभिर्भानुपादान् ॥ ४३ ॥

नावां वाटीं नाटयन्नव्यशाटीं
व्याजीकृत्य व्यक्तमम्भोधिमध्ये ।
पाथःक्लिन्नं पक्षमुत्क्षिप्य दूरं
व्याधून्वाना वीक्ष्यते पर्वताली ॥ ४४ ॥

सिन्धावम्भःसिन्धुराणां मदाम्भो-
लोभादुच्चैर्लोलमूहेऽलिचक्रम् ।
प्राप्तं दन्तिप्राज्यराज्याधिराज्या-
त्कायच्छाया कज्जरच्छत्रमेषाम् ॥ ४५ ॥

अम्भोराशावम्बुदन्तावलेन्द्रे-
ष्वावर्तानामावलीषु भ्रमत्सु ।
पाथोमर्त्याः प्राक्तनाः प्रायशोऽमी
मन्थानाद्रेर्मन्थमन्तः स्मरन्ति ॥ ४६ ॥

केलीभेदान्काश्चिदश्चद्भ्रमीका-
न्पाथोनारीबालिकाः शीलयन्त्यः ।
आवर्तानामात्तसाहायकानां
तन्वन्त्याशां तन्त्रि तर्कानुवृत्तौ ॥ ४७ ॥

वाचातीतां वारिमर्त्यार्भकाणां
तन्वि प्रज्ञां तर्कयामो यदेते ।
पाथः क्षारं पाययित्वा पयोधे-
रम्भोवाहानम्बु तेभ्यः पिबन्ति ॥ ४८ ॥

मन्ये पाथोमग्नभूभृन्निकुञ्जे
भोजं भोजं भोगिकन्या निगूढम् ।

पाथोमर्त्याः पश्य दम्भोलिपाणे-
भूयोऽप्यायुः पुष्कलं प्रार्थयन्ते ॥ ४९ ॥

इति कृतवरवर्णिनीप्रमोदो
यदुपतिरर्णववर्णनाविशेषैः ।
निजनगरमविक्षदीक्षणोद्य-
द्युवतिपरीतगवाक्षलक्षलक्ष्यम् ॥ ५० ॥

आहूय भीष्मकमनन्तरमात्मबन्धु-
वर्गं च सर्वमचिराद्वसुदेव एषः ।
पारेतरस्वविभवानुगुणं विधातुं
वैवाहिकं विधिमुपाक्रमताच्युतस्य ॥ ५१ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
पञ्चमः सर्गः ॥

## षष्ठः सर्गः ।

---

अथ भीष्मकान्धकपुरंध्रयः स्फुर-
द्गिरिशागिरीशपरिणीतिगीतयः ।
निबरीसमङ्गलमृदङ्गनिस्वनं
मणिपीठमध्यमनयन्वधूवरौ ॥ १ ॥

वसुदेववंशतिलकाय मङ्गलं
जगदभ्यर्च्यभीमजनुषे च मङ्गलम् ।
इति यौवते पठति केचनावले
तनुतः स्म तौ सुरभितैलचर्चितौ ॥ २ ॥

कृतमङ्गलस्नपनकेलिरच्युतः
परिकर्मकर्मकुशलैः प्रसाधितः ।
अवलम्ब्य दारुककराम्बुजं ततः
शनकैरगाहत विवाहमण्डपम् ॥ ३ ॥

सुदतीमणीमपि सुगन्धिभिर्जलै-
र्विहिताभिषेचनविधिं विधाय ताम् ।
विविधप्रसाधनविधानदक्षिणा
विपुलेक्षणा व्यधुरुदूढभूषणाम् ॥ ४ ॥

पदपद्ममम्बुजदृशः प्रसाधिका-
करयावकद्रवकरम्बितं बभौ ।
अनुचिन्त्य मङ्गलशिलाधिरोहणं
परिपक्वपाटलिमवैभवं किल ॥ ५ ॥

अनुरञ्जितं पदमलक्तकद्रवै-
र्विललास विभ्रमवतीशिखामणेः ।
अनुवेलमाचिकुरमङ्गतोऽखिला-
त्क्षरता किलादिमरसेन निर्भरम् ॥ ६ ॥

अनयोः पदोररुणयोः स्वभावतो
भर एव सोऽयमिति यावकद्रवम् ।
नवमौक्तिकांशुसलिलेन दूषय-
न्नतमध्यमामणिरधत्त नूपुरम् ॥ ७ ॥

प्रमदापदं सरसयावकद्रव-
प्रतिबिम्बिताङ्गदनवीनमौक्तिकम् ।
अरुणाब्जमच्छगरुदण्डमण्डल-
स्फुरितोदरं व्यधित पुञ्जितत्रपम् ॥ ८ ॥

चटुलेक्षणाचरणपद्मसंगतिः
सुकृतैरलम्भि सुलभेतरा परैः ।

इति हंसकः कलयति स्म संमदा-
त्कणितच्छलात्किलिकिलारवं किल ॥ ९ ॥

अबलामणेरधिनितम्बमण्डलं
कलिता कयापि मणिमेखला बभौ ।
मदकुम्भिकुम्भतटमण्डनीभव-
न्मणिशृङ्खलामहिमतस्करद्युतिः ॥ १० ॥

मदिरेक्षणामणिनितम्बमण्डली-
मधितस्थुषोऽविरतमङ्गजप्रभोः ।
विधृतां पुरो विजयतोरणस्रजं
मणिमेखला मनसि संन्यधापयत् ॥ ११ ॥

तरुणीमणेस्तदनु कण्ठभूषणा-
दधिकं विवेक्तुमपटुर्विभूषणम् ।
चतुरापि काचन चकोरलोचना
व्यतत प्रसाधनविधौ विलम्बनम् ॥ १२ ॥

द्रुतहाटकद्युतिसरीतिरोचिषः
सुतनोः सुवर्णमयपट्टभूषिता ।
अवलग्नयष्टिरभिकस्य संनिधे-
र्दधती दरोच्छ्वसितताभिवाबभौ ॥ १३ ॥

गजकर्णिकाकुसुमकल्पकङ्कण-
च्छलतश्चकोरनयनाकराम्बुजम् ।
तरुणीकरग्रहणभावुकस्मृतेः
पुलकाङ्कुराणि पृथुलान्युवाह किम् ॥ १४ ॥

अपरा प्रसाधनविधानकोविदा
सरसीरुहेण समतानिरूढये ।
करमूर्मिकावलयकङ्कणाञ्चितं
कलयांचकार कमलेक्षणामणेः ॥ १५ ॥

स्फुरणैरुदग्रशुभसूचकैरदः
स्फुटितं भवेदिति किमङ्गदं परा ।
अपहाय वामभुजमङ्गनामणे-
रपसव्यमेव भुजमध्यरोपयत् ॥ १६ ॥

कुचकुम्भयोः कुटिललोचनामणे-
स्तनुते स्म पत्रलतिकां तलोदरी ।
सुषुमासुधारसभरस्तथाप्यहो
सुतरां बभूव परितस्तरङ्गितः ॥ १७ ॥

अकृत स्वचिह्नमखिलं जगज्जय-
न्मकरध्वजः सुरमहीभृतस्तटे ।

इति बुद्धिमीक्षकजनस्य तन्वती
   महिलाकुचे मकरिकां परालिखत् ॥ १८ ॥

स्तनयोस्तरङ्गितनिशाविलासयो-
   र्मृगनाभिकर्दममृषातमिस्रयोः ।
उरुतारतारततिभिः परिष्क्रिया-
   मुचिताममन्यत नतभ्रुवः सखी ॥ १९ ॥

कमलाक्षि पश्य करमेष नायकः
   परितः प्रसारयति ते पयोधरौ ।
इति हारमर्पितवतीमियं सखीं
   कुटिलं व्यलोकत कुरङ्गलोचना ॥ २० ॥

अपि चक्रपीडनकृतावनिन्दिता-
   कुचभूभृतौ कृतमिथोभिघर्षणौ ।
सुखमग्रहारमुपकण्ठगं च य-
   द्विभृतः स्म सा किल सुवृत्ततौचिती ॥ २१ ॥

प्रमदापयोधरतटे प्रसाधिका
   विततान यां विमलहारमालिकाम् ।
विललास सा विषमबाणभूमिभृ-
   द्गिरिदुर्गहीरवरणानुसारिणी ॥ २२ ॥

उपनीय हारमुरुतत्कुचावदः-
प्रतिबिम्बदर्शनपराङ्मुखी परा ।
अथ जानती निजसखीजनस्मितै-
र्भ्रममात्मनः प्रतिमुमोच तं पुनः ॥ २३ ॥

शफरीदृशोऽथ दृशमेवमात्मिकां
समुदीक्ष्य शश्वदधिगण्डमण्डलम् ।
शफरीं कुरङ्गमदशादकज्जलै-
र्लिखति स्म कापि लिकुचस्तनी मुखम् ॥ २४ ॥

स्वपतोऽधिगण्डमभिकस्य ते पुरा
सखि मण्डनं मकरकुण्डलाङ्कतः ।
भविता ततो मकरिका भरस्तवे-
त्यपहासपूर्वकमुवाच काचन ॥ २५ ॥

वदनापदेशरतिवल्लभावनी-
पतिकेलिकाभवनजालकभ्रमम् ।
कलयांबभूव कमलेक्षणामणेः
कलितं कयापि मणिकर्णभूषणम् ॥ २६ ॥

अभृताननामृतमरीचिनिःसर-
त्सुषुमासुधौघजलनिर्गमश्रियम् ।

सुदतीमणेः श्रवणयोः सुमध्यया
परया ततः कनकपत्रमर्पितम् ॥ २७ ॥

वदनं विधाय तव वारिजं विधी
रविमण्डलं व्यतत रत्नकुण्डलम् ।
अत एव नित्यमजहत्प्रभाभरं
तदिदं सखीति वदति स्म तां परा ॥ २८ ॥

स्फुरिते कपोलभुवि कर्णभूषणे
तनुतः स्म तालयुगलभ्रमं तनोः ।
मणिदीपमोहमपि रत्नवालिके
लवणिम्नि लास्यकलनोन्मुखे मुखे ॥ २९ ॥

निशिताः कटाक्षनिभसायकावली-
र्मुहुरर्जुने किरति हन्त लोचने ।
किमु कर्ण एष वहति स्म कर्णिका-
मणिखेटगूढवपुरङ्गनामणेः ॥ ३० ॥

अधिरुह्य कर्णशिखरं दृगब्जयो-
रवलोक्य दैर्घ्यमधिकं मृगीदृशः ।
नवमुत्पलं नतमुखं कपोलयो-
रविशत्किमन्तरनुबिम्बदम्भतः ॥ ३१ ॥

प्रियपीतमप्यधरबिम्बमञ्जसा
किरणामृताप्लुतमियं करोत्विति ।
घुटिकामिवाक्षयसुधोर्मिलां स्वभू-
विहितां वधूरभृत नासिकामणिम् ॥ ३२ ॥

श्वसितानिलेन हसितांशुराशितो
गमिते दिशः स्मरयशःपुलाकके ।
अवशिष्यमाणमिव सारमङ्गना
बिभरांबभूव पृथुनासिकामणिम् ॥ ३३ ॥

अनुवारमञ्जनकृताञ्जनाञ्चला-
मपरा विधाय मणितूलिकां वधूः ।
कथमप्यथ प्रसृतिलोचनारुणेः
कलयांचकार धृतकज्जले दृशौ ॥ ३४ ॥

भुजभोगिपुंगवयुगाश्रयं प्रियं
सुषुमानिधिं सुखमियं विलोकिता ।
इति जानती किल परा तदीययो-
रबला ततान नवमञ्जनं दृशोः ॥ ३५ ॥

कुटिलः कुरङ्गमदपङ्ककल्पित-
स्तिलकस्तिलप्रसवनासिकामणेः ।

अलिकश्रिया बत बलाहतं शुचा
मलिनं सुधांशुशकलं मनस्यधात् ॥ ३६ ॥

ललनाललामनिटिले ललामकं
ललितं ललास मृगनाभिनिर्मितम् ।
मदनाभिरूप्यवसुमुद्रणोपमं
मदनासितातपनिवारणभ्रमम् ॥ ३७ ॥

कुटिलभ्रुवः शिरसि रेखिका बभौ
घुसृणारुणाय मनसेऽनुयायिने ।
विधुलोचनेन विशता कचाटवीं
कृतलाञ्छनेव किसलेन पद्धतिः ॥ ३८ ॥

इति भूषिताकृतिरियं सखीजनै-
र्नवरत्नचूर्णकृतरङ्गवल्लिकाम् ।
समिदाज्यलाजकुशसूनशालिनीं
जनकैरनीयत विवाहवेदिकाम् ॥ ३९ ॥

मधुसूदनोऽथ महिते मुहूर्तके
विहितेऽङ्कुरार्पणविधौ पुरोधसा ।
उपहारनीरजभिदाकृते करे
युवतीमणेः किमु बबन्ध कौतुकम् ॥ ४० ॥

मधुसूदनस्तदनु भीष्मकार्पितं
मधुपर्कमेष यदसिस्वदन्मुदा ।
समभूदपामशनमेतदेणदृ-
क्सरसाधरामृतभुजिक्रियाविधेः ॥ ४१ ॥

प्रमदाकराब्जपरिमर्शकन्दल-
त्पृथुघर्मतोयपृषतैः कराम्बुजम् ।
अभजत्तरां प्रथममेव सान्द्रतां
चरमं तु दानजलतो जगत्पतेः ॥ ४२ ॥

अपनीय तन्तुमधिपेन योजितं
सुदृशो गलेऽथ सुतरामदीपयत् ।
स च भूषणान्तरमशेषमुच्चकै-
रमुना किलाभरणमन्यदेधते ॥ ४३ ॥

ललनामणेरिनकरग्रहक्षणे
लघु संचुकोच करपद्ममद्भुतम् ।
अपि चाङ्घ्रिपद्ममधिरोपितं शिला-
मजनिष्ट चित्रमचिरेण पाटलम् ॥ ४४ ॥

कुचभूमिभृत्कठिनताजिते न्यधा-
त्पदमश्मनीयमिति मन्वते परे ।

अधिरोढुमुन्नतमुरःस्थलं हरे-
रिति मन्महे वयमियं रमा यतः ॥ ४५ ॥

विधिचोदितो विभुरसौ विलासिनी-
चरणाम्बुजग्रहणमाचचार यत् ।
प्रणयापराधशमनाय भाविनो
ग्रहणस्य तत्प्रणवतामदीधरत् ॥ ४६ ॥

रमणीमणे रमणपाणिपीडिता-
त्करकैतवात्कमलतो विनिर्गता ।
नवमौक्तिकालिरिव लाजसंततिः
क्रतुभुङ्मुखेऽकुरुत दन्तकौशलम् ॥ ४७ ॥

तपनीयकाण्डपटिकातिरोहितां
तरुणीमवेक्ष्य यदुवंशशेखरः ।
न चिराद्भविष्यति विलाससंपदां
नटनक्रियेति निरधारयत्ततः ॥ ४८ ॥

स्मरकेलिनर्तनकलाविधित्सया
कुसुमाञ्जलिं किल वितन्वती वधूः ।
करयोः प्रगृह्य नवमौक्तिकावलिं
कलयांचकार कमनस्य मूर्धनि ॥ ४९ ॥

विगलन्त्यथो विभुकिरीटतो वधू-
करमुक्तमौक्तिकमरीचिकैतवात् ।
चरणोद्गतत्वजनितं निजायशः
सुतरां ममार्ज सुरलोकवाहिनी ॥ ५० ॥

दयिताकराम्बुजविमुक्तमौक्तिक-
द्युतिधौतवस्त्रपरिवीतमूर्धजः ।
स्मृतिभूमहाहवविधौ शुभोत्तरे
विभुरेष दीक्षित इव व्यरोचत ॥ ५१ ॥

अमृताभिषेचनमिवाचरन्नसा-
वसमायुधायुधकृतार्तिशान्तये ।
अबलामणेरपि शिरस्यवाकिर-
द्विमलां विभुस्तदनु मौक्तिकावलिम् ॥ ५२ ॥

परिगृह्य पाणिकमलेन मौक्तिक-
प्रकरं विभुः प्रणयिनीकचोच्चये ।
प्रचलाकिनीप्रचयपिञ्छसंचये
करकावलीमिव घनाघनोऽकिरत् ॥ ५३ ॥

करमुक्तमौक्तिकमरीचिवीचिका-
कलितावगुण्ठनकलां विलासिनीम् ।

कलशाम्बुराशिलहरीपरीवृतां
 कमलाममन्यत सरोजलोचनः ॥ ५४ ॥

अनुदर्शिते हरिरनन्तरं ध्रुवे
 दयितामवेक्ष्य दरमुन्नमन्मुखीम् ।
अददामितोऽप्यधिकमुन्नतं पदं
 किममुष्य नेति किमपि व्यचिन्तयम् ॥ ५५ ॥

विहितेऽथ विप्रसदसाशिषां भरे
 विभुरेव धीरमधिरूढसिन्धुरः ।
अधिरोप्य रत्नशिबिकामणूदरी-
 मधिवीथि पौरनयनोत्सवं व्यधात् ॥ ५६ ॥

अथ सौरभाभ्यधिकतैलमांसलैः
 परितः प्रदीपपटलैः प्रसर्पिभिः ।
अतिदूरमन्धतमसे निवारिते
 दिवसः किमुत्सवदिदृक्षयागतः ॥ ५७ ॥

विविधौषधैरथ विचित्रदीपिकाः
 समदीपयन्कतिपये समन्ततः ।
अपरेऽप्यनेकविधलोहयन्त्रकै-
 र्हरितां मुखानि रटितैरपूरयन् ॥ ५८ ॥

जयशङ्खसंघकनकानकावली-
मुरवाद्यवाद्यनिनदे निरन्तरे ।
प्रसभं प्रतिध्वनिरिवाभ्रमण्डपे
सुरदुन्दुभिध्वनिभरो व्यजृम्भत ॥ ५९ ॥

गणिकाः क्वणत्कनककङ्कणोत्करा
भरतोदिताभिनयभेदकोविदाः ।
परिमञ्जमञ्जितविलाससंपदो
ननृतुस्तरामुभयपार्श्वसीमसु ॥ ६० ॥

जय पूतनान्तक जयेश केशिह-
ञ्जय मल्लसूदन जयाहिमर्दन ।
जय कंसहिंसक जगत्पते जये-
त्यपदानमस्य धुरि वन्दिनो जगुः ॥ ६१ ॥

अवलोकितुं तमबलोपशोभितं
चलितं गजेन तुलितं मणित्विषा ।
त्वरयोपवीथि पुरयोषितस्ततो
व्यतिभूषमीयुरतिभूमिसंभ्रमाः ॥ ६२ ॥

मसृणैर्विलिप्य घुसृणैः पदद्वयं
सरसेन यावकरसेन च स्तनौ ।

अपहाय चाळिमपहासकारिणीं
मदनाकुला सुरदनाप कापि तम् ॥ ६३ ॥

अपरा हृदीशमपराधकारिणं
किल जानतीह जलजातलोचना ।
भरिता रुषाप परिताडनाय किं
द्रुतमेकपाणिधृतमेखलागुणा ॥ ६४ ॥

मणिदर्पणीमदभरापहारिणोः
स्तनयोरुदीक्ष्य घनयोस्तु बिम्बितम् ।
इतरा मृगीदृगितरागमञ्जसा
निजयालिलिङ्ग भुजया यदूद्वहम् ॥ ६५ ॥

पिटकं सरत्नकटकं समुद्वह-
न्त्यधिपाणिपद्ममपिधाय भूषणम् ।
द्रुतीव कापि सुदती समुल्बण-
स्मरयातनाशु निरयादभि प्रभुम् ॥ ६६ ॥

प्रचलाकिनी प्रविचला गरुच्छटा-
स्तरलाञ्जवेन कुरलान्विवृण्वती ।
नवनीरवाहमिव नीलिमश्रिया
स्वदमानमेक्ष्य मुदमाप कापि तम् ॥ ६७ ॥

लिखितुं व्यवस्य(?) सखि तुङ्गनासिकं
किमु कंजनाभममुकं विनिर्गता ।
इति कापि कांचिदतिकामकातरां
कुशला जगाद सशलाकिकाञ्जनाम् ॥ ६८ ॥

मदनोऽयमिन्दुवदनो रतिस्त्वियं
प्रमदा शिरीषसुमदामकोमला ।
अभजं चिराय शुभजं फलं दृशो-
रिति कापि जातनुतिका समाययौ ॥ ६९ ॥

एष एव रमणीरमणीयः
पञ्चबाण इति पामरपाठः ।
इत्युदीक्ष्य यदुवल्लभमेनं
काचिदाकलयति स्म कृशाङ्गी ॥ ७० ॥

आलिरेति करिणाग्रत एव
प्रेक्ष्यतां यदुपते प्रणयेन ।
एवमालिमसमञ्जसवाचा
संलपन्त्यतत संभ्रममेका ॥ ७१ ॥

साक्षिणि स्मरहविर्भुजि चिन्ता-
साधितं सरसमस्य विवाहम् ।

कन्यका च कथमाचरणाञ्च-
ल्लाजजाललसमानकराब्जा ॥ ७२ ॥

साध्वसाभिनयसंभृतकम्प-
प्रेयसीसमुपगूहनहृष्टः ।
द्वारसीम्नि भवनस्य ततोऽसौ
डोलिकाविहृतिसौख्यमयासीत् ॥ ७३ ॥

रङ्गवल्लिरचना रमणीया-
रात्रिकारचनकेलिचणाभिः ।
वर्धितो वरतनूभिरथासौ
वन्दते स्म पितरौ गृहमेत्य ॥ ७४ ॥

अङ्कमेहि रभसादविशङ्कं
भद्र मत्कमिति तत्फणितोऽपि ।
प्राञ्जलिः पुरत एव स तस्थौ
प्रश्रयः प्रकृतिरेव यदूनाम् ॥ ७५ ॥

मातरं तदनु मातृसपत्नी-
रादरेण विनमन्नविशेषम् ।
मानयन्गुरुजनानपि सर्वा-
न्मान्दिरं निजमियाय स मन्दम् ॥ ७६ ॥

द्वारचारुमणितोरणरम्भा-
काञ्चनक्रमुकचित्रवितानम् ।
सूनलाजसुभगंकरणोर्वी-
रङ्गवल्लिरचनारमणीयम् ॥ ७७ ॥

काञ्चनाकलितकृत्रिमपुत्री-
चाल्यमानसितचामरगुच्छम् ।
राजमानमणिमण्डपराजी-
मध्यसंघटितमौक्तिकमञ्चम् ॥ ७८ ॥

नूत्नरत्नततिनिर्मितनाना-
द्वारतारतपनीयकवाटम् ।
प्राङ्गणप्रचलगन्धकरीक्षा-
लोलकेलिमृगलोचननीलम् ॥ ७९ ॥

क्वयमानकृतलम्बनझल्ली-
चामरस्तबकदर्पणजालम् ।
केलिहंसशुककेकिकपोत-
व्रातघुष्टमणिपञ्जरपुञ्जम् ॥ ८० ॥

कल्पवल्लिमिव क्लृप्तविभ्रमां
निश्चलद्युतिमिवाचिरद्युतिम् ।

रुक्मिणीं रुचिररूपशालिनीं
रञ्जयन्रतिमुवाह तत्र यः ॥ ८१ ॥

सा सखीजनवचोऽवजानती
कर्णशल्यमिव संगमे नवे ।
औषधैरिव गुरूक्तिभिर्वधू-
र्न न्यवर्तत न चाभजत्पतिम् ॥ ८२ ॥

सा कथंचन सखीजनैस्तदा
प्रापिता शयनधाम कामिनी ।
बिम्बितप्रियतमं मणीमय-
स्तम्भमाश्रयितुमप्यलज्जत ॥ ८३ ॥

प्रापितापि सविधं प्रियस्य सा
गन्तुमैहत सखीजनैः समम् ।
वीक्षिताप्यतत दृष्टिमन्यतो
भाषिताप्यकृत मौनमुत्तरम् ॥ ८४ ॥

आश्रितापि शयनं कथंचन
व्रीडयाजनि वधूः पराङ्मुखी ।
संमुखस्थितिरपीक्षितानि सा
साहसं परममन्यताबला ॥ ८५ ॥

निद्रयेव दृढमीलितेक्षणा
लज्जयाथ शयने तलोदरी ।
चुम्बिता प्रणयिना निनिन्द सा
प्रोन्मिषन्ति पुलकाङ्कुराण्यलम् ॥ ८६ ॥

कञ्चुकं व्यपनयत्यथ प्रिये
स्वस्तिकं समतनिष्ट भामिनी ।
सस्पृहं प्रियतमोऽपि सस्वजे
वञ्चितोरुकुचमर्दनं बहिः ॥ ८७ ॥

रत्नदीपवितथासु फूत्क्रिया-
स्वङ्गना मुकुलितेक्षणा स्वयम् ।
अंशुकं हरति वल्लभे बला-
त्सस्वजे तदवलोकनह्रिया ॥ ८८ ॥

वामे भागे हिमगिरिसुतामिन्दुमौलेः स्फुरन्तीं
वक्षःसीमन्यपि मुररिपोर्वारिराशेः कुमारीम् ।
आलेख्येषु प्रणयसुभगं दर्शयन्वीतलज्जां
कारं कारं चिरमरमयत्तां नवोढां स वोढा ॥

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु
रुक्मिणीकल्याणनाम्नि काव्ये
षष्ठः सर्गः ॥

# सप्तमः सर्गः ॥

---

पाटलप्रसवपक्ष्मलरागः
  प्रस्फुरन्नवशिरीषपरागः ।
मल्लिकोद्यदलिमल्लविरावो
  मानिनीजनमनोहरहारः ॥ १ ॥

मन्दतावहमनोज्ञभुजोष्मा
  मांसलीकृतवनावनिशुष्मा ।
दूयमानयवसो दिवसोऽथ
  कथ्यमानसलिलो विलुलोके ॥ २ ॥

सांप्रतं दवशिखी मम साह्ये
  निर्दहेज्जगदिदं निमिषेण ।
इत्यवेत्य पवनोऽथ समस्त-
  प्राण एव भजति स्म तिरोधिम् ॥ ३ ॥

पुष्पिणीरपि पुरा नववल्ली-
  रन्वभुङ्क्त यदसौ मधुमत्तः ।

पातकारिकमु ततः परिपक्का-
क्षिप्रमेव पवनः क्षयमाप ॥ ४ ॥

गाढमातपभरादिव गन्तुं
कातरे सति समीरकिशोरे ।
मन्महे मसृणदिग्जययात्रो
जायते स्म जगति स्मरवीरः ॥ ५ ॥

प्रज्वलत्सु दवपावककीलै-
र्बाणकोशभवनेषु वनेषु ।
केलिलोलललनानयनास्त्रः
केवलं समचरद्विषमास्त्रः ॥ ६ ॥

विस्फुरद्विमलवैणवमुक्ता-
व्याजलाजविहिताञ्जलिहोमाः ।
प्रत्यपद्यत शुचिर्वनभूमीः
संनिधौ दवसमीरसखस्य ॥ ७ ॥

मारुते बत गतेऽपि वयस्ये
कालपर्ययवशात्कृशिमानम् ।
दाव एष दवसीम्नि विजह्रे
कृष्णवर्त्मनि किमस्ति सुहृत्त्वम् ॥ ८ ॥

पक्ववेणुपरुदुद्गतमुक्ता-
   दावपावककणाबलिदम्भात् ।
कंजभूः करकवासवकोपा-
   ङ्कुरणार्थमकिरद्दिवि बीजम् ॥ ९ ॥

चञ्चदर्चिरवलोक्य दवाग्ने-
   श्चारु धूमवलयं चलमभ्रे ।
अञ्चलत्तपलवारिदशङ्की
   चातकश्चटुलचञ्चु ववल्ग ॥ १० ॥

वेणुपर्वविवरोद्गतमुक्ता-
   कैतवेन मरुकाननसीमा ।
निष्ठुरातपनिरन्तरतापा-
   त्स्फोटजातमधिकं स्फुटमूहे ॥ ११ ॥

मूर्च्छदच्छतरमौक्तिकरोचिः-
   पुञ्जकूटसितचामरचारैः ।
विह्वलां तपनतापविशेषै-
   र्वैणवो वनभुवं किमवीजन् ॥ १२ ॥

शाखिमूलगतमस्मदमित्रं
   शश्वदेतदभिरक्षति शैत्यम् ।

इत्थमाहितरुषा किल देहे
काननं झटिति घर्मदिनेन ॥ १३ ॥

आमृशन्नपुनरुत्थितिं पातं
कूपवारिषु गभीरतरेषु ।
नातनिष्ट नलिनीपतिरुग्री-
नन्यथा कथमिमानि हिमानि ॥ १४ ॥

दूरिता द्रुततरं भुवनेभ्यः
शीतता भृशमशीतकरेण ।
किं न्वकारि शिशिरर्तुकृते सा
वेधसा वरतनूकुचमूले ॥ १५ ॥

मुग्धशीतकरमौलिनिवास-
स्थानमेतदिति किं स्थिरभावाः ।
आश्रयन्त वटमूलमशेषै-
रातपैरभिहता जडिमानः ॥ १६ ॥

अन्तरम्बु जडतामतिगूढां
शोषयञ्झटिति शोषितपाथाः ।
उष्णभानुरुदरं सरसीनां
निर्बिभेद निजपादपटिम्ना ॥ १७ ॥

भाविनं घनभटैरुपरोधं
संविचिन्त्य नु सहस्रगभस्तिः ।
आरसातलमभिन्त्त धरित्री-
मात्मनो वसुचयानपिधातुम् ॥ १८ ॥

विस्फुरद्विवरभागविनिर्य-
द्भोगिरत्नरुचिपुञ्जमिषेण ।
मेदिनी मिहिरपादहता द्रा-
गाननेन विववाम किलास्रम् ॥ १९ ॥

मेदिनीविवरतो मुहुरुच्चै-
रुल्लसन्त्युरगलोकवलारेः ।
देहदीधितिरवीचरदुर्व्या-
मारवे पथि मरीचिमिषेण ॥ २० ॥

व्योमसीमनि विसृत्वरमुच्चै-
र्मन्महे मरुमरीचिवितानम् ।
काननानलकदर्थनभीत्या
सृष्टमम्बुभरमम्बरसद्भिः ॥ २१ ॥

विस्तृतं मरुमरीचिवितानं
वीक्ष्य वीक्ष्य जलविभ्रमतोऽभ्रे ।

आकुलेषु बहुधार्यमरण्ये-
ष्वाविरास दिवसेष्वथ दैर्घ्यम् ॥ २२ ॥

अम्बुधेरपसृतेषु विदूरं
पारदेशमपहाय पयःसु ।
सैकताध्वनि शनैरिनरथ्ये
याति किं ययुरहानि विवृद्धिम् ॥ २३ ॥

आनिशागमनमुज्झितकीला-
स्वर्यमोपलतटीष्वपराह्णैः ।
अङ्घ्रिमर्पयितुमर्कतुरङ्गे-
ष्वाकुलेष्वहरगाहत वृद्धिम् ॥ २४ ॥

विश्वचक्षुषि वियद्गतिताभि-
र्दह्यमानदवधूमलताभिः ।
अक्षमे त्वरितमध्वविवेके
द्राघिमा किमभवद्दिवसेषु ॥ २५ ॥

आदधन्निभृतमातपसेवां
शश्वदाहितसमीरनिरोधः ।
वीतकम्प्रमुपनीततपश्री-
र्वासरः किमु वयोऽधिकमाप ॥ २६ ॥

विश्वदिग्विजयविश्लथवाञ्छे
पञ्चबाणधरणीपमणीन्द्रौ ।
शर्वरीपटकुटीं समयोऽसा-
वञ्जसैव समकोचयदद्धा ॥ २७ ॥

वीतमारुतविवर्तनवार्ते
वृद्धिमेयुषि विशिष्य निदाघे ।
तामसीकपटकालभुजंगी
तादृशं किमवहत्तनिमानम् ॥ २८ ॥

दिष्ट एष दिवसेषु निरुन्ध-
न्मारुतं जनितमांसलभावः ।
मन्दमन्दममुकं किमु मुञ्चं-
स्तामसीषु तनुभावमयासीत् ॥ २९ ॥

पावनाचरितदूरतरस्य
प्रायशो भुवनतापकरस्य ।
अद्भुताय समयस्य न दोषा-
हानिरद्भुतमिदं तु शुचित्वम् ॥ ३० ॥

पादघातमधिगत्य पतङ्गा-
त्पद्मिनीपरिवृढोपलसंघः ।

कोषवः किल ववाम कृशानुं
क्ः सहेत समहाः परिभूतिम् ॥ ३१ ॥

शांभवाक्षिशिखिनः किमु मत्तो
भूयसी भुवनतापकतेति ।
प्रस्थितोऽजनि परीक्षितुकामो
राजताचलतटीं रविरद्धा ॥ ३२ ॥

दक्षिणां दिशमयं निजसूनो-
र्दर्शनाय किल दण्डधरस्य ।
चन्दनाचलतटीचटुलाहि-
प्रेक्षणान्निववृते पतिरह्नाम् ॥ ३३ ॥

आश्रयत्यतिसमीपमनूरा-
वाकुलानाहिशिशूनवलोक्य ।
मन्महे मलयतो दयमानो
नायको निववृते पतिरह्नाम् ॥ ३४ ॥

शोषयञ्जलमशेषमपास्य-
न्मारुतं विदलयन्महिभागान् ।
दावधूमततिधूसरिताभ्र-
स्तेज एव तनुते स्म स कालः ॥ ३५ ॥

माधवाधिगतमांसलभावा-
मोदशालिपुमनोदमनोऽसौ ।
आतपोऽधित विरोचनजातः
शुक्रसाह्यसुलभामभिवृद्धिम् ॥ ३६ ॥

प्राप्त एष सुदृशामुपकारः
प्राक्तनेन सुकृतेन मयेति ।
नृत्यति स्म निचयो व्यजनानां
संघटेत सकलं हि सुवृत्ते ॥ ३७ ॥

आतपैरधिकमाहिततापै-
ष्कृष्णदीधितिरुदञ्चदुदन्यः ।
पातुमैहत पयांसि समन्ता-
त्कल्पयन्करसहस्रमजस्रम् ॥ ३८ ॥

जाततृष्णमपिबञ्जलशाला-
पालिवारिजदृशां पथि पान्थाः ।
आननैर्न परमम्बु मनोज्ञं
लोचनैश्च लहरीं लवणिम्नाम् ॥ ३९ ॥

कोष्णमेतदमृतं करकस्थं
दीयतामधरभाजनगुप्तम् ।

इत्युदीतहसितामिह पाथः-
पालिकां परिचुचुम्ब युवैकः ॥ ४० ॥

अङ्गमङ्गममृतद्रवशीतं
कल्पयेः सुमुखि ते करकं चेत् ।
अङ्गजार्तिरतिशान्तिमयेते-
त्यब्वगः स्मितमदाज्जलदात्र्यै ॥ ४१ ॥

प्रक्रमे बहुतिथं प्रतिरुद्धो
मारुतो जनितमांसलभावः ।
पाथसामिव ततः परिवाहो
भग्नसेतुरगमान्प्रबभञ्ज ॥ ४२ ॥

वारिशोषणकरं घनबृन्दै-
र्वारयार्कमिति वारिदवाहम् ।
नाथितुं नु जलनाथनिदेशा-
त्प्राङ्मुखोऽजनि तदा पवमानः ॥ ४३ ॥

पौरजामपदबालविसृष्टं
वातशाटवलयं चलदभ्रे ।
पांसुचक्रकपटात्पवमानः
पांसुले पथि चरन्नहरत्किम् ॥ ४४ ॥

भानुधामपथिकश्रमपाथो-
दह्यमानदवधूममरुद्भिः ।
अन्वमायि नचिरादभिवृद्धि-
र्ज्योतिरादिजनुषां जलदानाम् ॥ ४५ ॥

तारानाथशिलैककल्पमिहिकाधारागृहाभ्यन्तरे
पाटीरद्रवपङ्किलं मणिमयं पर्यङ्कमासेदिवान् ।
फुल्लन्मल्लिमरन्दपूरशिशिरे भूवल्लभो निष्कुटे
तन्वीसूक्तिभिरेव घर्ममनयत्तादृशानन्दथुः ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
सप्तमः सर्गः ॥

# अष्टमः सर्गः ।

---

कन्दलन्नवकदम्बकोरकैः
    कैतकस्फुरणकेलिकारकैः ।
वावदूकबलवैरिवाहनै-
    र्वासरैरजनि पान्थमोहनैः ॥ १ ॥

चातकार्भककुलं तृषाकुलं
    चञ्चलाक्षिवलनेन वीक्ष्य किम् ।
प्रावृडाविरभवत्पयोधर-
    प्रस्नुताधिकपयःपरिष्कृता ॥ २ ॥

काननावलिकृशानुकीलया
    कल्पितैर्गगनकूटभाजने ।
कज्जलैरिव निकामकच्चरैः
    कालमेघनिकरैरभूयत ॥ ३ ॥

कल्पये जलमुचां कदम्बकं
    रोहितोरुमणिदण्डमण्डितम् ।

आतपैरधिकमङ्कुरद्रुजो
नीलमातपनिवारणं क्षितेः ॥ ४ ॥

घर्मतापघनया नभःश्रिया
स्वर्णदीकृतसुखावगाह्या ।
स्यन्दमानजलबिन्दुसुन्दरः
किं व्यतानि घनबृन्दकुन्तलः ॥ ५ ॥

व्यञ्जयन्धुरि मयूरपिञ्छिकां
विश्वचक्षुरपिधानदक्षिणः ।
सर्वतः समयमायिकः क्षणा-
दभ्रपुष्पमकिरत्कराञ्चितम् ॥ ६ ॥

वारिदाश्वघटया वलत्तटि-
द्वल्गयानुसृतवारिवेगया ।
गर्जितच्छलगभीरहेषया
वल्गितं वियति वल्गुधारया ॥ ७ ॥

सिन्धुचूषणकलासु कौशलं
शीलितुं कलशजन्मनो मुनेः ।
नीरवाहनिवहेन शिश्रिये
चन्दनाचलचमत्कृता दिशा ॥ ८ ॥

वंशदण्डदृहिवैरिधन्वना
पट्टगुच्छदचिरप्रभाजुषा ।
इन्द्रनीलचतुरन्वयानवा-
नम्बुदेन समयाधिभूरभूत् ॥ ९ ॥

प्रज्वलत्यशनिपावके भृशं
तादृशं तपनहेम तापयन् ।
किं व्यधत्त घनसिक्थकान्तरे
रेखिकामचिररोचिषो मिषात् ॥ १० ॥

काननानलशिखाकदम्बकं
भावयन्मनसि भावि वैशसम् ।
चञ्चलानिचयचातुरीं वह-
न्नीरवाहनिचयानसेवत ॥ ११ ॥

पूर्वमारुतमिषेण फूत्क्रिया-
मारचय्य समयाहितुण्डिकः ।
अम्बुभृत्कपटपेटकान्तरे
विद्युतः फणिवधूर्व्यलासयत् ॥ १२ ॥

प्रायशः पथिकपद्मलोचना-
प्राणवायुभरपारणाकृते ।

वारिवाहफणिभिर्विषोत्करै-
विद्युदालिरसना विसारिताः ॥ १३ ॥

नीरदं किमु निरीक्षितुं चिरा-
दागतं शिखिकदम्बमादरात् ।
चन्द्रकस्फुरणचातुरीमिषा-
च्चारु लोचनसहस्रमाददे ॥ १४ ॥

शातमन्यवशरासकोणया
वीणया किमपि वेदितस्वरात् ।
षड्जमुज्ज्वलगुणं वलाहका-
दध्यगीषत कुलानि केकिनाम् ॥ १५ ॥

घट्टयन्नचिरकान्तियष्टिकां
तत्तदोमिति च गर्जितैर्गृणन् ।
नर्तनं नवरसोदयोचितं
केकिसंसदमशिक्षयद्घनः ॥ १६ ॥

वारिदो वनशिखण्डिसंसदां
नृत्तकेलिनिबरीससंमदः ।
आततान हरिकोपकैतवा-
दब्जरागनिकराभिषेचनम् ॥ १७ ॥

आहवज्वलनसंगतां घन-
श्रेणिकासु चिरवासनावशात् ।
विस्फुलिङ्गवितर्ति विसृत्वरीं
शक्रकोपपटलीं शशङ्किरे ॥ १८ ॥

नीरदालिनिनदैर्विदूरभू-
र्जायते जगति रत्नसूरिति ।
शक्रकोपमिषरत्नसंकुला
संबभूव सकलापि मेदिनी ॥ १९ ॥

क्वापि राजनि गते हठाज्जले
मज्जयत्यथ मलिम्लुचे घने ।
शक्रकोपमिषरत्नसंचयो
व्यञ्जितो नु बत रत्नगर्भया ॥ २० ॥

मेदिनी निजरजोविमुक्तये
मेदिनी विहितमज्जना जलैः ।
उल्लसत्तनुरुवाह किं तृणाङ्-
कुरजालपुलकाङ्कुरावलिम् ॥ २१ ॥

वारिशोषकमिनं वलाहकै-
र्वारयेति वचनं जलेशितुः ।

श्रापयन्बलभिदं तदीरितैः
प्रावृणोत्पुनरिनं मरुद्घनैः ॥ २२ ॥

आतपैरभिहते निजे मृगे
हर्तुमेष हरिणं सुधानिधेः ।
आततान घनजालमम्बरे
मार्गसंचरणरोधि मारुतः ॥ २३ ॥

पद्मिनी प्रणयिनि प्रभापतौ
बन्धभाजि घनबन्धनालये ।
निर्निरोधविरहानलासहा
निर्ममज्ज नियतं सरोजले ॥ २४ ॥

कोकबान्धवकुमुद्वतीविटौ
कीर्त्तिलेशमपि न स्मरिष्यतः ।
भोगिभोगशयनेन यत्तदा
निद्रया दृढनिमीलिताविमौ ॥ २५ ॥

गर्भितभ्रमरकं करण्डकं
कल्पयन्कुटजकैतवान्नभाः ।
चञ्चलाफणिमुखोऽचरीकर-
स्त्रायशोऽम्बरमणिप्रमोषणम् ॥ २६ ॥

शीर्णकङ्कणमपास्तहंसकं
  किं च दूरमवधीरिताम्बरम् ।
व्यञ्जितस्वरविशेषकंधरं
  विद्युता व्यहृत वारिदागमः ॥ २७ ॥

भूषयन्भृगुकुलं महेन्द्रगि-
  र्याहितस्थितिरपास्तरेणुकः ।
अम्बुवाहजमदग्निभूरसा-
  वर्जुनस्फुरणमादधेऽद्भुतम् ॥ २८ ॥

किं गिरीशमुपकण्ठकल्पिता-
  नल्पशिल्पपरिरम्भसंभ्रमा ।
कालिका कलयति स्म संमदा-
  द्भूरिबाष्पभरनिर्भरं तदा ॥ २९ ॥

मामिनस्य महसायमाक्षिप-
  त्प्रागितीव रजनी घनाश्रयात् ।
सर्वमाक्रमत घस्रमन्यथा
  सर्वदान्धतमसं कथं भवेत् ॥ ३० ॥

आपगावलिभिरानतैर्न चे-
  दातनिष्यदभिवृद्धिमम्बुभिः ।

वारिदे पिबति वारि निर्भरं
नाभविष्यदचिरान्नदीपतिः ॥ ३१ ॥

नीरवाहनिभवर्मभाक्षिका-
नीतवारिनिधिनीरशीकरैः ।
सिञ्चतीव सरणिं घनागमो
विश्वदिग्विजयसादरे स्मरे ॥ ३२ ॥

नीरवाहनिभनीलशाटिको-
ल्लोचलोलहरिचापतोरणम् ।
धारया तरलमौक्तिकस्रजा
व्योम कामसदनं विदिद्युते ॥ ३३ ॥

वारिवाहनिवहाः पिबन्त्यमी
वारिपूरमनिवारितं न चेत् ।
आपगाभिरभिपूरितः क्षणा-
दाक्रमेत जगदम्भसां निधिः ॥ ३४ ॥

अञ्जनादिकमशेषमादरा-
न्नीलवस्तुनिचयं सरोजभूः ।
वारिदान्किमु विधाय शेषतः
पक्वजम्बुफलजालमादधे ॥ ३५ ॥

मारुतोद्भवममुं महीयसा
   गर्जितेन कृतकर्णदुर्व्यथम् ।
धार्तराष्ट्रधृतिहारिणं घनं
   भीममेत्य मुमुदेऽद्भुतं बकः ॥ ३६ ॥

नीरवाहनिभनाकुभूवल-
   द्विद्युदावलिबिलेशयोद्भवा ।
अण्डपङ्क्तिरलसद्बलाकिका-
   मालिकाकपटतो मरुत्पथे ॥ ३७ ॥

भूरिसंकुचितपुष्करं करो-
   दञ्चितोरुतरशीकरोत्करः ।
वारिवाहमदवारणावले-
   श्चामरैरिव बकैश्चमत्कृतम् ॥ ३८ ॥

मानसोन्मुखमरालमण्डली-
   चञ्चुमुक्तबिसवल्लिचातुरीम् ।
आततान पुनरुक्तवैखरी-
   मातता बकपरम्पराम्बरे ॥ ३९ ॥

वारिदेन बहुवर्षशालिना
   नीरदत्वमुचितं निषेदुषा ।

किं बकावलिपटी गलज्जल-
स्यन्दिनीविधुतये चिरं धृता ॥ ४० ॥

राजहंसजयिनां पयोमुचां
राजते किमु यशःपताकिका ।
किं नु धूननदुकूलपट्टिके-
त्यातनिष्ट विशयं बकावली ॥ ४१ ॥

कालकामुककृतं पयोधरे
नाकनायकधनुर्नखाङ्कनम् ।
वीक्ष्य किं नु विधृतं नभःश्रिया
व्रीडया बककुलोत्तरीयकम् ॥ ४२ ॥

वारिदाशरवरे बलाकिका-
दन्तसंततिनितान्तभीषणे ।
हन्त गर्जति शुचिं विजित्य किं
हंससंसदमला पलायिता ॥ ४३ ॥

बलाहकच्छलहयवैरिणं बल-
द्बलाकिकाकपटवराटकस्रजा ।
विलोक्य किं वियति विलिल्यिरे रया-
त्तुरङ्गमास्तुमुलभयोदयाद्रवेः ॥ ४४ ॥

पाथोदस्वरमण्डलीफलकभूपर्यायलोलास्तटि-
त्तन्त्रीरार्द्रतयातिघर्घरतरोत्तालस्वरञ्यञ्जिकाः ।
शश्वच्चालयतः पयोदसमयाद्गानं समभ्यस्यतां
प्रायेण प्रचलाकिनां समभवद्गीतिस्वरो विस्वरः ॥

अम्भोदच्छलशल्यकाः पटपटद्दम्भोलिघुर्घूरवो-
द्दामा हाटकटङ्कपाटलतटिद्दंष्ट्राविटङ्कोद्भटाः ।
धाराव्याजशलाङ्कुरोत्करकिरः प्रागाशुगोत्ताडिता
मुस्ता जग्ध्यवशोषिताः करमिषात्स्रस्ताः समातन्वत ॥

धूमो बाष्पपरिप्लुतास्तनुभृतां दृष्टीर्विधत्ते स्पृश-
न्दूरादेव तु धूमयोनिनिवहो दृष्टोऽध्वगानां दृशः ।
चारित्रैरतिरिच्यते स्वजनकं कश्चिज्जगत्यां जनः
कुम्भोऽम्भः पिबति स्वयं परिमितं कुम्भोद्भवस्त्वम्बुधिम् ॥

चोरं चोरमशेषमात्मवसुसंभारं सरोजेक्षणे
स्वैरं गूढपदाहितातिनिभृतस्वापे दुरापेऽम्बुधौ ।
जृम्भद्गर्जितभीषणाः प्रतिकलं जम्भारिचापोद्भटाः
प्रायो विष्णुपदस्पृशोऽब्धिमभजन्पाथोधरा यामिकाः ॥

उत्तालस्तनिताभटीनिशमनव्यामुग्धमुग्धेक्षणा-
सद्यःस्वैरसमर्पितस्तनपरीरम्भप्रियंभावुकः ।
वेलालङ्घनजाङ्घिके निरवधावानन्दपाथोनिधौ
मज्जं मज्जमयं घनर्तुमनयद्विश्वंभराधीश्वरः ॥ ४९ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
**अष्टमः सर्गः ॥**

## नवमः सर्गः ॥

---

असमशरशरासकेलिकारै-
रचिरपचेलिमकेकिनीनिकारैः ।
सरसिजकुशलाङ्कुरप्रकारैः
समजनि शारदवासराधिकारैः ॥ १ ॥

महति कुमुदिनीमहोत्पलिन्यौ
सरसि निमग्नतनू समुद्दिधीर्षुः ।
उडुपतरणिमण्डलोपनेता
समजनि शारदघस्रकर्णधारः ॥ २ ॥

उदयमुपगतोऽयमब्जबन्धुः
सरसि निमग्नतनुं समुद्धरेन्माम् ।
इति किल बहिरीषदुच्छ्रितोऽभू-
त्प्रथमपलाशमिषात्करो नलिन्याः ॥ ३ ॥

विरहविहतजीवनानुबन्धा
ननु नलिनी पुरतो निरीक्ष्य नाथम् ।

अवनमितमुखीत्रपानुषङ्गा-
दभवदधोमुखबिम्बिताब्जदम्भात् ॥ ४ ॥

प्रतिफलनमिषान्निजोपकण्ठं
प्रणयिनमागतमब्जिनी सरागम् ।
प्रतिफलितमधोमुखं पयोजं
सुखमपदिश्य वलन्मुखी चुचुम्ब ॥ ५ ॥

दिवि दिवसमणिं निरीक्ष्य साक्षा-
दभिनवमम्बुजमन्तरङ्कुरद्रुचः ।
निगदितुमिव नीरजव्रजेभ्यः
प्रतिफलनच्छलतः पयो जगाहे ॥ ६ ॥

अलिपटलमवेक्ष्य लोलमारा-
दहह बलाहकजालशङ्कि चेतः ।
मुकुलमविकमुग्धमम्बुजाना
मविशदधः सलिलेषु बिम्बदम्भात् ॥ ७ ॥

सरसि कृशजले सरोजिनीत्वं
समधिकमुन्नतनालपद्मदम्भात् ।
पतिमिव घनबन्धनात्प्रमुक्तं
प्रसभमुदीक्षितुमुन्मुखी बभूव ॥ ८ ॥

शुकततिवपुषा सुराधिनेतु-
 र्वियति धनुर्लतिका विपर्यणंसीत् ।
बभुरभिनवबन्धुजीववेषा
 बलरिपुकोपगणा वसुंधरायाम् ॥ ९ ॥

सकलभुवननिर्निमेषपद्मा
 विहितकलाधरवैभवा विशेषात् ।
शरदुपचितबन्धुजीवसंप-
 द्विधिरजनीति न विस्मयोदयाय ॥ १० ॥

अभिनवशरकाण्डपाण्डुरश्री-
 रमलपयोधरभारलोभनीया ।
शुकतातिशुभरोमराजिरम्या
 शशधरगर्भवती शरच्चकाशे ॥ ११ ॥

शिथिलितबकमालिकादुकूलं
 शिव शिव दिष्टविटे नभोरमायाः ।
हरति किमु हठेन मेघकैश्या-
 द्गलितमुडुप्रभुमल्लिगर्भकेण ॥ १२ ॥

जगति जलधरैर्गृहीतमुक्तं
 चुलुकयितुं चतुरर्णवीजलौघम् ।

कलशसुकृतकन्दलं मुनीन्द्रं
शरदुदलासयदञ्जसेति शङ्के ॥ १३ ॥

कतिचन गगनेन्दिरोरुनासा-
मणिममलं कथयन्ति कुम्भडिम्भम् ।
कलुषितसलिलप्रसादहेतोः
कतकमहं कलये शरद्गृहीतम् ॥ १४ ॥

सुलभभयतया घनान्धकारे
सुचिरमिमा रचितैकदेशवासाः ।
नियतमुदयति त्विषामधीशे
निजनिजधाम दिशो दशापि भेजुः ॥ १५ ॥

विमतविजयकेलिसाहसिक्य-
प्रगुणसमुद्यमशालिनां नृपाणाम् ।
करिकलभघटाघटोरुशुण्डा-
हतिभयतो हरितो गता विदूरम् ॥ १६ ॥

स्फुटनमितमुखं निपीय मूल-
स्फुरितसरोरुहशीधुवारिपूरम् ।
समजनि कलमावलिस्तदानीं
समजनि पाटलिमस्फुरन्मुखश्रीः ॥ १७ ॥

हसदभिनवमूलहल्लकोच्चैः-
प्रसृमरधूलिपरंपरानुषङ्गात् ।
समधिकमरुणैरभावि सद्यः
कणिशगणैः कलमाङ्कुरस्य नूनम् ॥ १८ ॥

कलमकणिशचारुचञ्चुकोटिं
पथि पथि कीरपरम्परां विशङ्के ।
श्रवणमधुरशालिपालिगीति-
स्वरविजितोक्तितया तृणं चरन्तीम् ॥ १९ ॥

मणिभिरनुकलं प्रतीक्षुमुक्तैः
सविधवधूकलगीतिकाविलीनैः ।
शरदि समजनिष्ट शालिसीमा
सततमुदञ्चितसारिणीजलेव ॥ २० ॥

निभृतमनुलतागृहं निजाज्ञा-
कृतरतिकेलिषु शालिपालिकासु ।
किमु रतिकितवो वृतीक्षुचापो-
द्गलितमणीगुलिको ररक्ष शालिम् ॥ २१ ॥

समुदयसमयद्रवीकृताभि-
र्मणिततिभिः स्फुरिता वृतीक्षुकाण्डाः ।

किमजनिषत शालिपालिनारी-
सुमधुरगीतिसुखोदिताश्रुपूराः ॥ २२ ॥

सुखविहितमुरारिबोधमुद्रो
विलसदगस्त्यमहाविकासिबाणः ।
समजनि भुवि शारदावतारो
विहितमयूरविजृम्भणो विचित्रम् ॥ २३ ॥

जडमपि जनितप्रसादमन्त-
र्जगति वितन्वति शारदावतारे ।
समजनि सरसोक्तिभिः कवीन्द्रै-
रिति क्रियते भविताद्भुतोदयाय ॥ २४ ॥

भुवनमवनशेषमेष दत्त्वा
पुनरनवेक्ष्य पुरः प्रदेयमर्थम् ।
किमु घननिवहस्तदा ललम्बे
किमपि विलक्षतया वलक्षभावम् ॥ २५ ॥

अनुपदमुदयोन्मुखीं हिमानी-
मधिनिजगर्भमिमाः किमादधानाः ।
प्रतिनवशरकाण्डतुल्यकक्ष्यां
प्रतिपदमानशिरे पयोदरेखाः ॥ २६ ॥

अनुकलजलसेचनव्यपाया-
द्वनकुलकोटिशखण्डमण्डलानि ।
अशनिहुतवहोरुहेतिदाहा-
दलमलभन्त दिशां विभूतिराशेः ॥ २७ ॥

दिविषदधिपदिङ्मुखोपजात-
श्वसननिकाममलीमसस्वभावौ ।
विधुरविमुकुरौ विमार्ष्टुकामो
घनभसितं कलयांबभूव कालः ॥ २८ ॥

जलधरसमयं जवेन जित्वा
किमु शरदागमकैतवप्रवीरः ।
घनपटलपटीकुटीरवाटी-
मनयत भस्मदशाममुष्य नूनम् ॥ २९ ॥

मलिनमपि महेन्द्रचापवल्ली-
मिलदचिरांशुगुणेन मेघकूलम् ।
असकृदहह घट्टयन्ननेहा
किमु कुरुते स्म शनैर्जहत्कलङ्कम् ॥ ३० ॥

परिसरभुवि खेलतां बकानां
परिचयमेत्य चिरं परम्पराभिः ।

जलधरनिवहा जगाहिरे किं
धवलिमतत्त्ववतां धुरंधरत्वम् ॥ ३१ ॥

त्रिदशपुरतरङ्गिणी तटान्त-
प्रहसितकाशपरम्परासकाशैः ।
दिशि दिशि दिविषत्पथावकाशे-
ष्वतिविशदैः शरदम्बुदैश्चकाशे ॥ ३२ ॥

वियति पुलिनमण्डलानि विष्व-
ग्विमलवलाहकलेशविभ्रमेण ।
विरमति जलदागमे कथंचि-
द्विबुधधुनी किमुदञ्चयांचकार ॥ ३३ ॥

जलपरिचयमेचकीकृताः प्रा-
ग्दिनमणिदीधितिभिः शनैर्विभिन्नाः ।
दिशि दिशि परिशीर्णतारमुक्ता
जलधरशुक्तिततीर्जहावनेहा ॥ ३४ ॥

धवलतरुचोऽपदिश्य धारा-
धरनिकरान्नियतं धराभृदीशाः ।
हृदि सपदि हिमव्यथां विचिन्त्य
प्रकटितझाटिपटास्तदा बभूवुः ॥ ३५ ॥

जलनिधिजलजातमश्वरत्नं
  करिवरमभ्रमुकामुकं च दृष्ट्वा ।
सपदि समभवन्घना वलक्षाः
  शतमखवाहनतासमानभावात् ॥ ३६ ॥

नियतमयमनन्तकुण्डलीन्द्रः
  शरदि विधौ शनकैः समुत्थितेऽस्मिन् ।
अनवसरवशाच्चिरादमुक्तं
  घनचयकञ्चुकसंचयं व्यमुञ्चत् ॥ ३७ ॥

भगवति शयनोत्थिते मुकुन्दे
  भराविगमेन विसृत्वरैर्विशेषात् ।
फणशतपवनैर्विधूतमभ्रे
  फणिपतिकञ्चुकमभ्रबृन्दमूहे ॥ ३८ ॥

सरभसमभिगच्छदच्छहंसी-
  परिषदतुच्छतरच्छदच्छवीनाम् ।
अकुरुत पुनरुक्तिमम्बरान्ते
  सिततरशारदवारिवाहलेशः ॥ ३९ ॥

जगति विचलतां जनाधिपानां
  विजयरमापरिणीतिविभ्रमाय ।

शितघनपटलेन सिद्धमार्गे
सिचयवितानचमत्क्रिया सिषेवे ॥ ४० ॥

प्रथममतितृषा पयः प्रपीतं
कटुलवणाम्बुनिधेर्घना वमन्तः ।
पुनरमरपुरापगाम्बु पीत्वा
पुपुषुरमी वपुषा नु पाण्डिमानम् ॥ ४१ ॥

वनशिखिविहितव्रणाभिशान्त्यै
प्रथमकृताम्बुदतैलपट्टबन्धम् ।
अतनुत नभसः क्रमादनेहा
सितघनकैतवशुभ्रपट्टबन्धम् ॥ ४२ ॥

खरकिरणकरोत्करैः कठोरै-
रधिगतमूर्छनमम्भसाभिषिच्य ।
स्वयमथ समयः सिताभ्रखण्डैः
सपदि लिलिम्प निलिम्पवर्त्म नूनम् ॥ ४३ ॥

सकृदपि भजति स्म नो वियोगं
समधिकमुत्कलिकाकुला पुरा या ।
अभजत न पतिं नदी तदासा-
वपगतभूरिरसा शरद्वशेन ॥ ४४ ॥

अभवदधिकपङ्किलापि पद्या
सुगमतमा सुमधूलिभिर्जपानाम् ।
पुनरजनि च दुर्गमा प्रफुल्ल-
स्थलनलिनीगलितैर्मधूलिपूरैः ॥ ४५ ॥

रुचिरशुकावलीललितरोमलताकलितां
विकसितनीलनीरजवितीर्णवतंसविधिम् ।
प्रतिनवबन्धुजीवविलसत्तिलकां शरदं
प्रभुरभिनन्दति स्म दयितामिव तामपराम् ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
नवमः सर्गः ॥

## दशमः सर्गः ॥

---

तदनु यौवनदृप्तदलोदरी-
कुचगिरीन्द्रकुटुम्बिमहोष्मभिः ।
रजनिपुष्टिविधैकरसायनै-
रजनि कामिजनानुगुणैर्दिनैः ॥ १ ॥

हिमकुलं किल हीनबलं पुरा
समुपलभ्य पुनः सहसा धृतिम् ।
नलिनबन्धुमरुन्ध सबान्धवं
न हि जयापजयौ नियतस्थिती ॥ २ ॥

हिममुदीक्ष्य हिमाचलगोचरं
दिनमणौ दिशमेयुषि दक्षिणाम् ।
पुनरदो भुवनानि समावृणो-
दुपचयं भजतेऽरिरुपेक्षितः ॥ ३ ॥

तुहिनशैलतुषारपरम्परा-
रभसवेपितरथ्यगणो रविः ।

निववृते नियतं मलयाचलो-
  ल्लसदहीन्द्रगरोष्मलिते पथि ॥ ४ ॥

शमनसैरिभदर्शनकातर-
  स्वरथसैन्धवसत्वरचङ्क्रमैः ।
द्रुततरं किमु दक्षिणदिङ्मुखो-
  द्गतिरतानि गभस्तिमता तदा ॥ ५ ॥

विहितसाहसवृत्तिभिरञ्जसा
  बत तुषारभरैर्बलवत्तरैः ।
पतिमवेक्ष्य पराजितमादधे
  किमु शुचा कृशतां दिवसश्रिया ॥ ६ ॥

मिहिकया बहुधा कलिताशया
  मिलितमेक्ष्य पतिर्नियतं निशा ।
अधित मानमतीव सुदुःसहं
  प्रणयिनः परया ननु मेलनम् ॥ ७ ॥

परिभवादहहा तुहिनाहिता-
  त्प्रणयिनीरपि रक्षितुमक्षमः ।
भयवशान्नियतं नलिनीपतिः
  प्रसभमभ्रपथे प्रपलायत ॥ ८ ॥

प्रगुणवेगपतङ्गतुरङ्गम-
प्रकरपादपुटाहतिचूर्णितम् ।
विशदमभ्रकुलं वियदध्वनि
ध्रुवमलक्षि तुषारभरात्मना ॥ ९ ॥

प्रचितकोशशता परितःस्फुर-
त्प्रचुरपत्त्ररथापि पयोजिनी ।
क्षयमियाय हिमैः क्षणतस्तदा
जलकृताभिरतेः क्व जयो भवेत् ॥ १० ॥

अतिकठोरतरातपनिर्वृता
कमलिनी कणिकामपि हैमनीम् ।
अधिकशीतलिमानमसोढ नो
पतिहितं हि भवेत्प्रमदाहितम् ॥ ११ ॥

कुमुदिनीं तुहिनांशुकुटुम्बिनी-
महिमधामवधूमपि पद्मिनीम् ।
तुहिनमाशु तुतोद समं तदा
भवति किं नु जडे स्वपरज्ञता ॥ १२ ॥

अतिगभीरहृदोऽपि महाह्रदाः
कमलिनीविरहाधिककातराः।

बहलजृम्भितबाष्पपरिप्लुता
बभुरहो बत नेह यथापुरम् ॥ १३ ॥

प्रतिवधूरवधूततमा हिमैः
प्रसभमेव समीक्ष्य पयोजिनीः ।
प्रणयिनं परिरभ्य दृढं प्रभा
प्रकटतामभजन्न भयादिव ॥ १४ ॥

व्रततिकाकपटव्रजसुभ्रुवा-
मपहरन्नचिराद्दलशाटिकाः ।
किमपि कुन्दमहीरुहकोटिका-
मकृत नन्दसुतस्तुहिनागमः ॥ १५ ॥

निखिलपुष्पनिराकृतिनिष्ठुरे
स्फुरति भूरितुषारभरे तदा ।
कुसुममेकमराजत कुन्दजः
समरुचौ सकलं किल मोदते ॥ १६ ॥

अधिलवङ्गसुमं हिमशीकरा-
नलिततिर्जहती परभागिनः ।
त्रिचतुरानपिबत्तृषिता मधु-
भ्रमवती नवकुन्दभृतान्पुनः ॥ १७ ॥

सहृदयेषु सरोरुहकोरके-
ष्वधिगतेषु विपत्तिमनेहसा ।
किमिति तापमवाप कृशोदरी-
कुचसरोरुहकुड्मलसंचयः ॥ १८ ॥

सुचिरमूष्मभिया सुदृशां कुच-
क्षितिधरं किल हारलता श्रिता ।
अवरुरोह समानरुचौ हिमे
विभवशालिनि वीतभयोदया ॥ १९ ॥

प्रथममेव सरन्ध्रतया हिम-
प्रकृतयो नवहारमणीगणाः ।
किमु जिता हिमवैरिभिरूष्मभिः
कृशतनुस्तनदुर्गभुवं जहुः ॥ २० ॥

उदितभीरयमूष्मलिमा हिमा-
त्कुटिलदृक्कुचदुर्गमुपाश्रितः ।
तदधिरोहभिया तरसा धुता-
मकृत हारमयीमधिरोहिणीम् ॥ २१ ॥

किममितंपचघर्मनखंपच-
स्तनतटीघटनात्तरसा स्फुटेत् ।

इति विचिन्त्य हृदि प्रमदाजनः
परिजहौ निजहारपरम्पराम् ॥ २२ ॥

सपदि हन्त हिमं सरसीरुहां
सकलमाकलयत्कुलमाकुलम् ।
व्रणयति स्म मुहुर्वरवर्णिनी-
वदनवारिजमोष्ठदलाञ्चले ॥ २३ ॥

प्रकटितोल्बणधूममनेकधा
प्रथममाहितकोप इव ज्वलन् ।
अधिहसन्त्यभियुध्य शिखी हिमै-
रजनि हापितहेतिरसंशयम् ॥ २४ ॥

उरसिजेष्विव पक्ष्मलचक्षुषा-
मुदयते दहनेषु किमुष्णिमा ।
इति विवेक्तुमिवादरतः करा-
न्विदधिरेऽधिहसन्ति विलासिनः ॥ २५ ॥

निजसखानि निरीक्ष्य सरोरुहा-
ण्यपहतानि करो युवतीतलैः ।
अहह शोकवशेन हसन्तिका-
मनलपातकृते किमसेवत ॥ २६ ॥

समय एष हठेन सरोरुहा-
मपहरन्नखिलामपि संपदम् ।
अहह तत्सुहृदोऽपि वधूकरा-
नभिहसन्ति नितान्तमतापयत् ॥ २७ ॥

हिमभिया किमु मित्रहितं वधू-
शयनिभं नलिनं शरणागतम् ।
विरमपालयदेष शिखावल-
स्तदुचितं ननु तत्र धनंजये ॥ २८ ॥

अनुदिनं यदमुं वसुसंचयै-
रनलमम्बुजबन्धुरवर्धयत् ।
हृदि विधाय तदेव हिमाद्वधू-
करनिभं कमलं किमपालयत् ॥ २९ ॥

अथ विहस्तितझाटिपटीमदै-
र्हसितगर्भगृहोदरमर्मदैः ।
अधिकशीतकृपीडसमुद्भवे-
रजनि शैशिरवासरवैभवैः ॥ ३० ॥

शिशिरमारुतशीफरितव्यथः
सरभसं सकलोऽपि तदा जनः ।

अधिहसन्ति करार्पणपूर्वकं
शरणमाप सखायममुष्य किम् ॥ ३१ ॥

स्तनगिरौ परिरक्ष्य तवोष्णतां
प्रतिदिशानि पुनः समयेष्विति ।
अभयदानमिवादधती वधू-
रभिकृशानु ततान कराम्बुजम् ॥ ३२ ॥

शिशिरवातभिया किल शीतता
शिव शिव श्रयति स्म शिखावलम् ।
अमुमदोभयतो मृगलोचना-
कुचगतोष्मलिमानमवैत्र किम् ॥ ३३ ॥

शिशिरवातविजृम्भणजां रुजं
शिथिलतामुपनेतुमना मनाक् ।
अधिहसन्त्यनलोऽपि समन्ततो
भसितदिग्धतनुर्भवति स्म किम् ॥ ३४ ॥

परिचिता सुचिरं परिमुच्य मां
हिमभयादियमूष्मलता गता ।
इति वियोगवशादिव पाण्डुता-
मधित हव्यवहो भसितच्छलात् ॥ ३५ ॥

शिव शिव द्विगुणां शिशिरव्यथा-
मपटुरस्म्यपनेतुमिति ह्रिया
अभिहसन्त्यनलो भसितच्छला-
दधिकपाण्डुरजायत तत्क्षणात् ॥ ३६ ॥

धनुषि पुण्ड्रमये दलिते गुणे-
ऽप्यलिगणे विशिखेऽपि सुमोत्करे ।
मसृणिते शिशिरेण मनोभवो
जगदिदं जयति स्म तपोबलात् ॥ ३७ ॥

निजपतिं प्रसमीक्ष्य तपःस्थितं
दिनततिः कृशतामभजद्दृढम् ।
अधित वृद्धिमतीव विभावरी
पुनरुदञ्चितभूरितमोगुणा ॥ ३८ ॥

तपसि तादृशवल्कलधारिणः
शिशिरमारुतसेवनतत्पराः ।
किमिह माधवसंनिधये नगा
व्रतमपर्णतया विदधुस्तमाम् ॥ ३९ ॥

वेलाविलासिविषमायुधवीरवाद-
कोलाहलायितकुहूमुखकूजितेन ।

प्रालेयजालपटिमच्छिदुरेण पश्चा-
त्कालेन केनचिदभूयत कोमलेन ॥ ४० ॥

वल्लीवधूविततथः प्रथमर्तुहृद्याः
संचिन्त्य दक्षिणसमीरणसंनिकर्षम् ।
जीर्णच्छदच्छलमपास्य जरत्पटं किं
नव्यप्रवालवसनं परिधातुमैच्छन् ॥ ४१ ॥

अन्तः प्रवालमथ दक्षिणगन्धवाह-
सांगत्यमेत्य सकलाः लतिका दधत्यः ।
पत्रावलीपरिचयं च चिराज्जहत्यः
किंचित्समुच्छ्वसिततां क्रमशोऽधिजग्मुः ॥ ४२ ॥

उद्यानसीमनि नवप्रसवोन्मुखीषु
वल्लीमतल्लिकुहनावरवर्णिनीषु ।
आरादलिद्विजकुलान्यजपन्नमन्दं
मन्त्राक्षराणि मदनागमचोदितानि ॥ ४३ ॥

सद्यःप्रसूतसमयार्भकपादलिम-
प्रत्यग्रकुङ्कुमपचेलिमरागमग्रे ।
वल्लीषु पल्लवपटान्तमुदञ्चयन्ती-
ष्वामोदमन्थरतरोऽजनि गन्धवाहः ॥ ४४ ॥

आरामसीमसु नगाः प्रसमीक्ष्य किं नु
वल्लीमुधावरतनूः प्रसवोपपन्नाः ।
व्याकीर्णकौसुमरजोनिभगन्धचूर्णा-
व्यात्युक्षिकां विदधिरे मधुवारिपूरैः ॥ ४५ ॥

प्रायः पचेलिमतपःस्थितिपारवश्या-
त्पर्णावलीष्वपि परं दधतामनास्थाम् ।
मन्दानिलो वनमहीषु महीरुहाणां
वृन्दानि तानि दरमाश्वासितानि तेने ॥ ४६ ॥

संत्यज्य पर्णमपि साधु तपःस्थितानां
शाखाशिरोभुवि महीरुहसंततीनाम् ।
कीलावलीषु किसलच्छलतःस्फुरन्ती-
ष्वह्नाय संनिधिमधात्सुमनःसमूहः ॥ ४७ ॥

अग्रे प्रतापवदहृश्यत पल्लवश्रीः
शब्दस्ततः समजनिष्ट कुहूमिषेण ।
पुरस्फोर पुष्परजसाथ चमूपरागो
जेतुं व्यवस्यति जगन्ति मनोजवीरे ॥ ४८ ॥

मारावनीपतिमणेर्मधुमासमन्त्री
वीरस्य विश्वविजयोत्सवपुण्यकाले ।

पुन्नागानुपुङ्खपरपुष्टरवापदेशा-
त्पुण्याहघोषमुदजृम्भयतानुवेलम् ॥ ४९ ॥

मन्ये तपस्यदिवसैर्मधुवासराणां
सीमाविवादशमनार्थमिहान्यपुष्टाः ।
ताम्राम्रबालदलतल्लजकैतवेन
जिह्वाश्च लेखिरमधुः परशुं प्रतप्तम् ॥ ५० ॥

प्राप्तं वसन्तसमयं प्रमदावनेभ्यः
संवेद्य पञ्चमचमत्क्रियया सहर्षम् ।
संपूर्णरागसहकारदलापदेशा-
त्किं पूर्णपात्रमलभन्त वसन्तघोषाः ॥ ५१ ॥

वामभ्रुवां दशनवाससि शीतवात-
संजातवेदनतया श्लथरागबन्धे ।
प्राप्यावकाशनमिव पल्लवमुल्लसन्तं
प्रायोऽगिरन्परभृता वशगास्तदुक्तेः ॥ ५२ ॥

तत्तत्प्रवालरुचितारतमीविवेक-
कौतूहलादिव कुहूमुखबाललोकाः ।
संगृह्य चूतमुखपल्लवतल्लजानि
चञ्चूपुटेषु चतुरं प्रतिशाखि चेरुः ॥ ५३ ॥

सौरभ्यसान्द्रसुमनःपवनाङ्कुरादौ
यूनोः प्रियाय युगपन्मिलितेऽखिलेऽपि ।
आसीन्निशाधिककृशा ननु पद्मजन्मा
प्रायः समग्रगुणसृष्टिपराङ्मुखः स्यात् ॥५४॥

प्रायः कुहूं परभृतद्विजतः समीपे
श्रुत्वा निजप्रियशुभेतरशङ्किचेताः ।
कार्श्यं किलाभजत कान्तिवियोगभीतिः
कान्ताजनस्य हि भवेत्कृशिमैकहेतुः ॥ ५५ ॥

ईषत्कठोरकरभावमिते प्रियाते
जानञ्जडाश्रयणमापदुदर्कमेव ।
प्रालेयभूभृदयनं परिहृत्य वातः
शङ्के समाश्रयति दक्षिणभूधरेन्द्रम् ॥ ५६ ॥

अभ्यागतस्य वसुहानिवशात्सुदूरे
स्थानं निजं सवितुरेष दिशन्समीरः ।
त्यक्तं तु देशममुना स्वयमाललम्बे
सौगन्ध्यमस्य भजतः सदृशं किलैतम् ॥ ५७ ॥

देशं समेत्य वत दण्डधराधिवासं
प्रायः क्रमेण परिहीणवसुप्रकर्षः ।

भूयोऽपि भूरिवसुलाभकृताभिलाषो
राजन्वतीं रविरगाद्धनदेन काष्ठाम् ॥ ५८ ॥

प्रायः कराग्रपरिमर्शनकेलिभिन्न-
प्रालेयसंहतिदुकूलपटावकुण्ठम् ।
अम्भोजबन्धुरलकाभरणं चिरेण-
मुग्धं चुचुम्ब मुखमुत्तरदिङ्मृगाक्ष्याः ॥ ५९ ॥

मलयमरुत्किशोरदरकम्पितमाधविका-
परिमलपूरदूरपरिमग्नजगन्ति चिरम् ।
मधुदिनवैभवानि मधुसूदन एष दृशा
किमपि कृतार्थयन्व्यहृत कैतकपत्रदृशा ॥६०॥

इति श्रीदग्नित्द्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये

दशमः सर्गः ॥



